शिखरेष्विव पतत्पतङ्गेषु प्रदीपेष्वनवरतमकरन्दबिन्दुसन्दोह-
लुब्धमधुकरनिकुरम्बझङ्कारमुखरितेषु म्लानिमानमुपगच्छत्सु
वासागारकुसुमोपहारेषु विगलत्कुन्दैरलकैः प्रियविरहशोका-
द्वाष्पबिन्दूनिवोत्सृजतीषु प्रियतमगमननिषेधमिव कुर्वतीषु
वाचालतुलाकोटिभिश्चरणपल्लवै रजनिशेषसुरतभरपरिश्रमवि-
गलितकेशपाशदरदलितमालतीमालापरिमललुब्धमधुकरनिकर-
पक्षानिलनिपीतनिदाघजलशीकरासु हेलाङ्गुजवल्लिकङ्कणझणत्कार-

---

रागयैक्रण्यं तैलेऽपि च निगद्यते। इति धरणिः। पक्षे स्नेहस्तैलम्। मन्दिमान-
मल्पतेजस्त्वम्। अतिवृद्धेष्विव दशान्तं वयसोऽन्तमुपागतेषु पक्षे दशान्तं वर्तिकान्तम् दशा
वर्तिर्दशा वय इति हारावली। विपन्नसदीश्वरेष्विव सर्वस्वदानादिना प्राप्तदारिद्र्येष्विव।
एतच्च स्नेहपदेन ध्वनितम्। पात्रमात्रावशेषेषु देहमात्रावशेषेषु तथाच कालिदासः।
शरीरमात्रेण नरेन्द्र! तिष्ठन्नाभासि तीर्थप्रतिपादितर्द्धिः। आरण्यकोपात्तफलप्रसूतिः
स्तम्बेन नीवार इवावशिष्टः॥ इति। पात्रं तु भाजने योग्ये देहे तीरद्वयान्तरे। इति
महीपः। यद्वा पात्रममात्यः। पात्रं स्रुवादौ पर्णे च राममन्त्रिणि चेष्यते। इति
विश्वप्रकाशः। पक्षे पात्रं भाजनम्। दानवेष्विव निशा रात्रिस्तस्या अन्तमध्ययोश्चरण-
शीलेषु पक्षे निशान्तं गृहं तन्मध्यचारिषु। निशान्तपस्त्यसदनमित्यमरः। अस्तगिरिरस्ता-
चलस्तच्छिखरेष्विव। पतङ्गः सूर्यः। पक्षे पतङ्गाः शलभाः। पतङ्गः शलभादित्याविति
विश्वः। अस्तस्तु चरमः क्ष्माभृदित्यमरः। एतादृशेषु वासागारकुसुमोपहारेष्वित्यन्वयः।
अनवरतं मकरन्दबिन्दुसन्दोहः पुष्परससमूहस्तत्र लुब्धमधुकराणामभिलाषुकभ्रमराणां
निकुरम्बं यूथं तस्य झङ्कारेण रवविशेषेण मुखरितेषु शब्दायमानेषु। सन्दोहविसरव्रजाः।
लुब्धोऽभिलाषुकस्तृष्णक्। निकुरम्बं कदम्बकमिति विश्वमरः। एतादृशीषु प्रियमा-
स्वित्यन्वयः। विगलत्कुन्दैः पतत्कुन्दकुसुमैरलकैः। करणे तृतीया। प्रियविरहेण
भाविप्रियविरहेण शोकस्तस्माद्वाष्पबिन्दूनिवोत्सृजतीषु। अनेन दृष्टिर्ध्वनिता। अत एव
प्रियगमननिषेधमिव कुर्वतीषु। तदाह नारदः। अकालजेषु नृपतिर्विद्युद्गर्जितदृष्टिषु।
उत्पातेषु त्रिविधेषु समरात्रं तु न व्रजेत्॥ इति। प्रवत्स्यत्पतिका नायिका प्रवत्स्यति
प्रियतमे प्रवत्स्यत्पतिकेष्यते। इति रसरत्नहारः। अनयोर्म्रियोः सङ्करः। वाचाला-
स्तुलाकोटयो येषु तादृशैश्चरणपल्लवैरुपलक्षितासु। उपलक्षणे तृतीया। ध्वनितमनेन

मुखरासु नवनखपदसंसक्तकेशनिर्मोकवेदनाकृतसीत्कारविनिर्गतदुग्धमुग्धदशनकिरणच्छटाधवलितभोगावासासु पुनर्दर्शनपृच्छाविधुरसखीजनानुक्षणवीक्ष्यमाणप्रियतमासु क्षणदागतवैयात्यवचनशतस्मारकगृहशुकचाटुव्याहृतिक्षणजनितमन्दाक्षासु शरद्दासरलक्ष्मीष्विव नखालङ्कृतपयोधरास्वासन्नमरणास्विव

---

ध्वनितम् । स्याज्जल्पाकस्तु वाचालः । पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् । इति द्वयोरमरः । रजनिशेषः प्रभातकालस्तत्र सुरतभरस्तेन परिश्रमस्तेन विगलितः केशपाशः केशकलापस्तत्र दरदलितानामीषद्विकसितानां मालतीनां मालास्तासां परिमलो जनमनोहरो गन्धस्तल्लुब्धमधुकरनिकरपक्षानिलेन निपीताः शोषिता निदाघजलशीकराः स्वेदकणा यासां तासु । पक्षिन्यः स्त्रिय इमाः । यत्तु । प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट् । इति तच्चिरविलम्बादिविषयम् । पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे । ईषदर्थे दरोऽव्ययम् । विमर्दोत्थे परिमलो गन्धे जनमनोहरे । स्तोमौघनिकरव्रात चतुर्ष्वमरः । उद्वेलद्वृत्तज्वलन्निकङ्कणस्य झणत्कारः सिञ्जितं तेन मुखरासु । स्वनेनापि स्तनितं ध्वनितम् । नवनखपदं रात्रिजातं नखक्षतं तत्र संसक्तः केशस्तन्निर्मोको निर्मोचनं तेन वेदना तया कृतः सीत्कारस्तस्माद्विनिर्गताभिर्दुग्धमुग्धदशनकिरणच्छटाभिर्धवलितो धवलीकृतो भोगावासो वासगृहं याभिस्तासु । दशनकिरणच्छटाभिस्तडिद्वनिता । मुग्धौ वर्बरसुन्दराविति विश्वः । भोगावासो वासगृहमिति हारावली । प्रियतमाः प्रेयांसः । क्षणं कामोत्सवं ददातीति क्षणदा रात्रिस्तद्गतं वैयात्यवचनशतं धृष्टतावचनानि तत्स्मारकगृहशुकस्य चाटुव्याहृतिभिः क्षणं क्षणमात्रं जनितं मन्दाक्षं लज्जा यासां तादृशीषु । तथा च माघः । अन्यदा भूषणं पुंसः क्षमा लज्जेव योषितः । पराक्रमः परिभवे वैयात्यं सुरतेष्विव । इति । चटु चाटुप्रिये वाक्ये । वैयात्यं धृष्टता मतेति हारावली । कलाविशेषोत्सवयोः क्षणः । मन्दाक्षं ह्रीस्त्रपा व्रीडा । व्याहार उक्तिर्लपितमिति विश्वमरः । शरच्छरद्वतुः । न खेनाकाशेनालङ्कृताः पयोधरा मेघा यासु । मण्डनं मण्डनानामितियदाकाशभूषणानामाकाशस्यैव भूषणत्ववर्णनम् । यद्वा न खेऽलङ्कृता भूषिताः सजला अतिनीला इति यावत् । तादृशाः पयोधरा मेघा यासु । शरत्काले निर्जलत्वादनलङ्कृतत्वमित्यर्थः । पक्षे । नखेन तत्क्षतं लक्ष्यते तेनालङ्कृताः पयोधराः स्तना यासां तादृशीषु । स्त्रीस्तनाब्दौ पयोधराविल्यमरः ।

जीवितेशपुराभिमुखेषु वसन्तवनराजिष्विवोत्कलिकाबहुलासु प्रियैरालिङ्ग्यमानासु कामिनीष्वान्दोलितकुसुमकेसरे केशरेणुमुषि रणितमधुरमणीनां रमणीनां विकचकुमुदाकरे मुदाकरे सङ्गभाजि प्रियविरहितासु रहितासु सुखेन मुर्मुरमिव वर्षति समन्तादर्पके दर्पकेषुदहनस्य दूरप्रसारितकोकप्रियतमारुते मारुते वहति जघनमदनपुरतोरणेन मदननगरमहानिधिकनकप्राकारेण रोमावलीलतालवालेन जघनचन्द्रमण्डलपरिवेषेण त्रिभुवनविजय-

---

जीवितेशो यमस्तस्य पुरं संयमनी। पक्षे। जीवितेशः पतिः। तत्पुरं शरीरम्। वल्लभे धर्मराजे च जीवितेशो धनागमे। पुरं पुरि शरीरे च गुग्गुलौ कथितः पुरः। इत्युभयत्र विश्वः। वनराजिर्वनपरम्परा। उत्कलिकोद्गतकोरकः। कलिका कोरकः पुमानित्यमरः। पक्षे। उत्कलिकोत्कण्ठा। उत्कण्ठोत्कलिके समे इत्यमरः। यमकेनाह। एतादृशे वाते वहतीत्यन्वयः। आन्दोलितकुसुमकेसरे कम्पितपुष्पकिञ्जल्के। रणितेन मधुरा मणयो यासां तादृशीनां रमणीनां केशरेणुमुषि केशपदेन तत्स्थानि पुष्पाणि लक्ष्यन्ते तद्रजोहारके। विकचानि विकसितानि च तानि कुमुदानि च कैरवाणि तेषामाकरे। एतादृशे सरसि सङ्गभाजि। अत एव मुदाकरे हर्षकारके। मुदेत्यत्र भागुरिमते टाप्। एतेन विशेषणद्वयेन शीतमन्दसुगन्धित्वं ध्वनितम्। प्रियविरहितासु। अत एव सुखेन रहितासु। समन्तात्। परितो दर्पकेषुदहनस्य कामबाणाग्नेरर्पके समर्पके। अत एव मुर्मुरमिव तुषाग्निमिव वर्षति। मुर्मुरस्तु तुषानल इति वैजयन्ती। कोकप्रियतमा चक्रवाकी। केसरे केशरे इत्यत्र सभेदयमकम्। भोजराजेनोदाहृतं च। शालंवहन्तीसुरतापनीयंसालं तडिद्भासुरतापनीयम्। रक्षोभरक्षोभरसन्निकूटा लङ्काकलङ्काकलिकाद्रिकूटे॥ इत्यत्र शालं सालमिति सभेदयमकमिति वर्णितम्। इदं स्थूलमव्यपेतयमकम्। केशर इति तालव्यमध्यपाठे छिदमेव यमकप्रमाणम्। अर्थे सत्यर्थभिन्नानां पदानां सा पुनः श्रुतिः। यमकम्। केसरी बकुले सिंहसटायां पुष्पमध्यगे। इति विश्वः। किञ्जल्कः केसरोऽस्त्रियाम्। रेणुर्द्वयोः स्त्रियां धूलिः। मुत्प्रीतिः प्रमदो हर्षः। व्याकोशविकचस्फुटाः। फुल्लश्चैते विकसिते। सिते कुमुदकैरवे। कन्दर्पो दर्पकोऽनङ्गः। पवी रोप इषुर्द्वयोः। कोकश्चक्रश्चक्रवाक इत्युभयत्रामरः। मेखलादाम्ना काञ्चीदाम्ना परिवृतजघनस्थलीमित्यन्वयः। नानपदेसि क्लीव्। तोरणेन बहिर्द्वारेण। प्राकारेण वरणेन। आलवालेनावापेन। थाला

प्रशस्तिरोमावलीकनकपत्रेण संकलहृदयबन्दिनिवासपरिखा-
वलयेन जगल्लोचनविहङ्गममालालासकशलाकागुणेनेव मेखला-
दाम्ना परिक्षिप्तजघनस्थलीमुन्नतपयोधरभारान्तरितमुखचन्द्रदर्शना-
प्राप्तिजनितखेदेनेव गुरुनितम्बबिम्बपयोधरकुम्भपीडाजनिताया-
सेनेव गृहीतगुरुकलत्रानुशयेनेव विधातुरतिपीडयतो हस्तपाश-
जनितायासेनेव मम मूर्धजयोरियत्प्रमाणयोः स्तनकलशयोः
कथं मय्येव निपातो भविष्यतीति चिन्तयेव क्षीणतरतामुपगतेन
मध्यभागेनालङ्कृतामनुरागरत्नमयकनकरुचकाभ्यां चूचुकमुद्रा-
सनाथाभ्यामतिगुरुपरिणाहतया पतनभयात् कीलिताभ्यामिव

---

इति भाषायाम्। परिवेषेण परिधिना। प्रशस्तिः प्रशस्तिवर्णः। सैव रोमावली तस्याः कनकपत्रेण कनकचित्रेण पत्रेण शाकपार्थिवादिः। यद्वा। ताम्रपत्रवत् कनकपत्रम्। सकलानां हृदयान्येव बन्द्यः प्रग्रहास्तेषां निवासः कारा तत्परिखावलयेन। खाई इति भाषायाम्। सर्वेषां हृदयानि तत्रैव निवसन्तीति भावः। जगल्लोचनानि सर्वजननेत्राणि तान्येव विहङ्गमाः पक्षिणस्तेषां माला पङ्क्तिस्तस्या लासकशलाकागुणः कांपा इति भाषायाम्। सर्वेषां लोचनाकर्षकेणेति भावः। तोरणोऽस्त्री बहिर्द्वारम्। प्राकारो वरणः शालः। स्यादालवालमावालम्। परिवेषस्तु परिधिः। प्रग्रहोपग्रहौ बन्द्यां कारा स्याद्बन्धनालये। खेयं तु परिखा। खगे विहङ्गविहगविहङ्गमविहायसः। स्त्रीकट्यां मेखला काञ्चीत्यष्टस्वमरः। गमेः सुपि वाच्य इति खश् विहायसो विह इति वाच्यं खच् च डिद्वा वाच्य इति विहायसो विहादेशे खित्यनव्ययस्येति मुमागमः। खनु अवदारणे। अन्येभ्योऽपि दृश्यन्त इति डः। परितः खाता परिखा। उत्प्रेक्षयाह। मध्यभागेनावलग्नेनालङ्कृतामित्यन्वयः। उन्नतपयोधराभ्यामन्तरितो व्यवहितो यो मुख-चन्द्रस्तद्दर्शनाप्राप्त्या जनितखेदेनेव। गुरुर्महान् नितम्बबिम्बो नितम्बमण्डलं पयोधर-कुम्भः स्तनकलशस्ताभ्यां पीड़या जनितायासेनेव। गृहीतो बृहत्कलत्रस्य पृथुश्रोणि-मण्डलस्यानुशयो दीर्घं द्वेषो येन। विधातुर्ब्रह्मणः। मूर्द्धशब्देनोर्ध्वदेशो लक्ष्यते। तत्रोत्पन्नयोः स्तनकलशयोर्मय्येव पातो भविष्यतीति चिन्ता क्षीणताहेतुः। मध्यमं चाव-लग्नं च मध्योऽस्त्री कलत्रं श्रोणिभार्ययोः। अनुशयो दीर्घद्वेषानुतापयोरिति त्रिष्वमरः। बृहत्कलत्रपदेन युवतीपतिः पीनत्वे वयसि वर्त्तमानस्य दृष्टान्तोऽपि प्रतीयते। गुरु-

चूचुकच्छलेन गिरिसारेण सकलावयवनिषिक्तशेषलावण्यपुञ्जाभ्यामिव हृदयतडागकमलाभ्यामिव हृच्छयकपोलचातुरिकाविभ्रमाभ्यां रोमावलीलताफलाभ्यां कन्दर्पदर्पवर्धनवशीकरणचूर्णपूर्णसमुद्गकाभ्यामशेषजनहृदयपतनसञ्जातगौरवाभ्यां संसारमहातरुफलाभ्यां यौवनमहापादपप्रसवाभ्यां हारलतामृणाललोभनीयचक्रवाकाभ्यां हारलतारोमावलीसङ्गमव्याजप्रयागतरुफलाभ्यां त्रिभुवनविजयपरिश्रमखिन्नस्य मकरकेतोर्विजनवासगृहाभ्यां पयोधराभ्यामुद्भासमानां मुखचन्द्रसन्निहितसन्ध्यारागेण-

---

स्तनवानुशयेनेति पाठस्त्वयुक्तत्वादुपेक्षितः । पयोधराभ्यामुद्भासमानामित्यन्वयः । चूचुकावेव रत्नं तत्प्रचुरौ कनकरुचकौ गुलिकामणि रत्नमये गुलिके यतोऽतश्चूचुके एव मुद्रे जतुमये नामाक्षराङ्किते मुद्रे ताभ्यां सनाथाभ्यां सहिताभ्याम् । रुचको मङ्गलद्रव्ये ग्रीवाभरणदन्तयोः । इति विश्वप्रकाशः । रुचकौ गुलिकामणिः । अतिगुरुपरिणाहतया विशालतया पतनभयाद्धेतोश्चूचुकच्छलेन मिषेण गिरिसारेण लोहकीलेन कीलिताभ्यामिव । सकलेष्ववयवेषु निषिक्तस्यातएवावशिष्टस्य लावण्यस्य पुञ्जाभ्यामिव । मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥ इति मेदिनी । हृदयतडागकमलाभ्यां कमलकोरकाभ्यामित्यर्थः । हृच्छयः कामः । कपोलचातुरिका गालमसुरिका इति भाषायाम् । रोमावलीलता तत्फलाभ्याम् । कन्दर्पः कामस्तस्य दर्पस्तद्वर्धनं तद्वशीकरणचूर्णं तेन पूर्णसमुद्गकाभ्यां सम्पुटाभ्याम् । स्तनदर्शनादेव कामाविर्भावो यूनामिति भावः । अशेषाणां सर्वेषां जनानां हृदयस्य मनसः पतनं तेन सञ्जातगौरवाभ्याम् । यथा कठिनद्रव्यान्तराभिघाताच्छरीरे ग्रन्थिसम्भवस्तथैतद्दर्शनेऽपि युवमनसां पातात् पयोधरसम्भवः । एतेनैतच्छरीरमार्दवं कुचयोः काठिन्यं च वर्णितम् । संसारमहातरुफलाभ्याम् । संसारस्येदमेवैकं भावः । यौवनं तारुण्यं तदेव पादपो वृक्षस्तत्प्रसवाभ्यां पुष्पाभ्याम् । तारुण्यं यौवनं समे । विटपी पादपस्तरुरित्युभयत्राप्यमरः । पुष्पं प्रसूनं सुमनः प्रसवश्च मणीवकम् । इति हैमः । त्रिभुवनविजयपरिश्रान्तस्येत्यनेन सौधनिवासो ध्वनितोऽतएव विजनवासगृहाभ्यां पटमण्डपाभ्यामित्यर्थः । तदाकारानुकारित्वादिति भावः । जनराहित्यवर्णनात् स्पन्दरहितत्वं ध्वनितम् । उत्प्रेक्षा प्रौढोक्त्या चाह । अधरपल्लवेनाधरोष्ठकिसलयेनोपशोभमानामिति सम्बन्धः । पल्लवोऽस्त्री किसलयमित्यमरः । मुखचन्द्रसन्निहितस्तत्समीपवर्ती सन्ध्यारागस्तात्कालि-

दन्तमणिरक्षासिन्दूरमुद्रानुकारिणा निःसरता हृदयानुरागेणेव रञ्जितेन रागसागरविद्रुमनवपल्लवेनेवाधरपल्लवेनोपशोभमानां तरुणतरकेतकदलद्राघीयसा पक्ष्मलचटुलालसेन हृदयवासगृहा-वस्थितहृच्छयविलासिनो गवाक्षशङ्कामुपजनयता सरागेणापि निर्वाणं कुर्वता गतिप्रसररोधकश्रवणकृतकोपेनेवोपान्तलोहि-तेन धवलयतेव जगदशेषमुत्फुल्लकमलकाननसनाथमिव गगनं कुर्वता दुग्धाम्भोधिसहस्राणीवोद्वमता कुन्दनीलोत्पलमाला-लक्ष्मीमिवोपहसता नयनयुगलेन भूषितां दशनरत्नतुलादण्डेन

---

कलौहित्यविशेषः। दन्तमणीनां रक्षा कान्तिविशेषसंरक्षणम्। तदर्थं या सिन्दूरमुद्रा तदनुकारिणा। निःसरता हृदयानुरागेण रञ्जितेनेव। कीर्तौ शौक्ल्यवदनुरागे लौहित्य-वर्णनं कविसम्प्रदायः। तथाच माघः। छादितः कथमपि त्रपयान्तर्यः प्रियं प्रति चिराय रमण्या। वारुणीमदविशङ्कमथाविष्कृतोऽभवदसाविव रागः॥ इति। राग-सागरोऽनुरागसमुद्रस्तत्सम्बन्धिविद्रुमस्य प्रवालतरोर्नवपल्लवेनेव। अत्र प्रौढोक्तिरपि। प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पनम्। विद्रुमः पुंसि प्रवालः पुंनपुंसकमित्यमरः। नयनयुगलेन भूषितामित्यन्वयः। तरुणतरकेतकदलद्राघीयसा तद्वद्दीर्घेण। ईयसुनि प्रियस्थिरेत्यादिना दीर्घशब्दस्य द्राघ्यादेशः। दलं पत्रं छदः पुमानित्यमरः। पक्ष्मलं पक्ष्मयुक्तं चटुलं चञ्चलमलसं मन्दं तादृशेन। हृदयमेव वासगृहं तत्रावस्थितस्य हृच्छयविलासिनः। कामविलासिनो गवाक्षशङ्कां वातायनशङ्कामुपजनयता। वाता-यनं गवाक्ष इत्यमरः। सरागेण सानुरागेण निर्वाणं मोक्षं कुर्वतेति विरोधः। मुक्तिः कैवल्यनिर्वाणमित्यमरः। परिहारस्तु निर्वाणं निवृत्तिः। एतद्दर्शनात्मनां पदार्था-न्तरेभ्यस्तेषां निवृत्तिरिति भावः। निर्वाणोऽवात इति निपातः। गतिप्रसररोधक-श्रवणकृतकोपेनेव। अन्तस्य समीपमुपान्तं प्रान्तदेशस्तत्र लोहितेन रक्तेन। उपान्त-मिति विभक्तीत्यादिना सामीप्येऽव्ययीभावः। रोहितो लोहितो रक्त इत्यमरः। दृष्टि-सञ्चारजन्यं विशेषं वर्णयन्नाह। धवलयता धवलं कुर्वता जगदशेषम्। उत्फुल्लानि व्याकोशानि कमलानि तेषां काननं तेन सनाथं गगनमन्तरिक्षं कुर्वता। प्रफुल्लोत्-फुल्लसम्फुल्लव्याकोशविकचस्फुटाः। नभोऽन्तरिक्षं गगनमित्युभयत्राप्यमरः। दुग्धाम्भोधि-सहस्रमिवोद्वमतोद्गिरता। टुवम उद्गिरणे। कुन्दनीलोत्पलमालालक्ष्मीमिवोपहसता। तदधिकशोभनत्वादिति भावः। नासावंशेन परिष्कृतां भूषितामित्यन्वयः। भूषितेव

नयनसमुद्रसेतुबन्धेन यौवनमन्मथमत्तवारणयोर्वरण्डकेनेव नासा-वंशेन परिष्कृतां विलोचनेन्दीवरभ्रमरपङ्क्तिभ्यां मुखमदन-मन्दिरतोरणाभ्यां रागसागरवेलाभ्यां यौवननर्तकलासिकाभ्यां भ्रूलताभ्यां विराजमानां घनसमयाकाशलक्ष्मीमिवोल्लसच्चारु-पयोधरां जयशब्दघोषणापन्नजनमूर्तिमिवोल्लसत्तुलाकोटिप्रति-ष्ठितां सुयोधनधृतिमिव कर्णविश्रान्तलोचनां वामनलीलामिव दर्शितवलिविभङ्गां वृश्चिकराशिरविस्थितिमिवातिक्रान्तकन्या-

---

परिष्कृत इत्यमरः। दशनरवानि दन्तरवानि तेषां तुलादण्डेन। नयनसमुद्रस्य सेतु-बन्धेन। सेतुरालौ स्त्रियां पुमानित्यमरः। यौवनमन्मथावेव मत्तवारणौ मत्तगजौ तयोर्वरण्डकेन। भित्तेरुभयपार्श्वे द्वौ स्थापयित्वा मतङ्गजौ। योधयन्तीति प्रसिद्धं भित्तिः सा तु वरण्डकम्। अगड इति भाषायां प्रसिद्धम्। कुञ्जरो वारणः करीत्य-मरः। रूपकातिशयोक्त्याह। भ्रूलताभ्यां विराजमानां शोभमानामित्यन्वयः। विलो-चनेन्दीवरस्य नेत्रनीलोत्पलस्य भ्रमरपङ्क्तिभ्याम्। इन्दीवरं च नीलेऽस्मिन्निति कुमुद-प्रकरणेऽमरः। मुखमदनमन्दिरस्य तोरणाभ्यां बहिर्द्वाराभ्याम्। तोरणोऽस्त्री बहिर्द्वार-मित्यमरः। रागसागरोऽनुरागसमुद्रस्तद्वेलाभ्याम्। अब्ध्यम्बुविकृतौ वेला कालमर्या-दयोरपि। इत्यमरः। यौवननर्तकलासिकाभ्याम्। नर्तकीलासिके समे इत्यमरः। श्लेषेणाह। घनसमयो वर्षाकालस्तस्य लक्ष्मीः शोभा तामिवोल्लसच्चारुपयोधराम्। स्त्रीस्तनाब्दौ पयोधरावित्यमरः। जयशब्दस्य घोषणामापन्ना प्राप्ता या जनमूर्त्तिस्तामिवो-ल्लसत्तुलाकोटौ प्रस्फुरमाणतुलाग्रे प्रतिष्ठितां स्थिताम्। परीक्षासमये शुद्धीभवन् सर्वैर्जयजयेत्युच्यते। उच्चैर्घुष्टं तु घोषणेत्यमरः। पक्षे। उल्लसत्तुलाकोटिना शोभ-मानपादाङ्गदेन प्रतिष्ठितां प्राप्तप्रतिष्ठाम्। तदस्य सञ्जातमिति तारकादित्वादितच्। पादाङ्गदं तुलाकोटिरित्यमरः। सुयोधनो दुर्योधनस्तस्य धृतिर्धैर्यमिव कर्णविश्रान्त-लोचना ताम्। यावत् कर्णं पश्यति तावत् तस्य धृतिरिति भावः। पक्षे। कर्णयोः श्रोत्रयोर्विश्रान्ते लोचने यस्यास्ताम्। कर्णशब्दयुक्तौ श्रोत्रमित्यमरः। वामनलीलामिव वामनावतारविष्णुलीलामिव दर्शितो बलेस्तन्नाम्नो दैत्यस्य विभङ्गो यस्यां ताम्। पक्षे। दर्शितो वलीनां त्रिवलीनां विभङ्गो यस्यां ताम्। वलिः प्राण्यङ्गजे स्त्रियामित्यमरः। वृश्चिकराशौ रविस्थितिमिवातिक्रान्ते कन्यातुले तन्नामकराशी यया ताम्। तयोस्तत्पूर्व-

तुलामुषामिवानिरुद्धदर्शनसुखां शचीमिव नन्दनेक्षणरुचिं पशुपतिताण्डवलीलामिवोल्लसच्चक्षुःश्रवसमटवीमिवोत्तुङ्गश्यामलकुचां वानरसेनामिव सुग्रीवाङ्गदोपशोभितां भास्वतालङ्कारेण चन्द्रेण वदनमण्डलेन लोहितेनाधरपल्लवेन सौम्येन दर्शनेन गुरुणा नितम्बबिम्बेन विकचेन नेत्रकमलेन शनैश्चरेण पादेन

---

त्वादित्यर्थः। पक्षे। अतिक्रान्ता कन्यानां तुला तुलना यया ताम्। उषा बाणासुरस्य कन्या तामिवानिरुद्धस्य दर्शनेन सुखं यस्याः। पक्षे। अनिरुद्धमनिवारितं दर्शनसुखं यस्यास्ताम्। शचीमिवेन्द्राणीमिव नन्दनस्येन्द्रवनस्येक्षणे रुचिर्यस्यास्ताम्। पुलोमजा शचीन्द्राणी। नन्दनं वनमितीन्द्रप्रकरणे द्वयोरमरः। पक्षे। नन्दयतीति नन्दना। नन्द्यादित्वात् कर्त्तरि ल्युः। अजादित्वाट्टाप्। तादृशी चक्षुरुचिर्नेत्रकान्तिर्यस्यास्ताम्। ईक्षणं चक्षुरक्षिणी इत्यमरः। पशुपतेः शिवस्य ताण्डवलीलामिवोल्लसच्चक्षुःश्रवसमुल्लसत्सर्पाम्। ईशः पशुपतिः शिवः। ताण्डवं नटनं नाट्यम्। चक्षुःश्रवाः काकोदरः फणीति विश्वमरः। पक्षे। उल्लसच्चक्षुःश्रवसं शोभमाननेत्रकर्णाम्। अटवीमिवारण्यमिवोत्तुङ्ग उच्चः श्यामो लकुचो यस्यां ताम्। लकुचो लिकुचो डहुरित्यमरः। बडहर इति भाषायाम्। अटव्यरण्यं विपिनमिति च। पक्षे। उत्तुङ्गौ श्यामलौ कुचौ स्तनौ यस्यास्ताम्। दग्धः पट इतिवदवयवधर्मस्य समुदाये समारोपात् कुचयोः श्यामलतावर्णनम्। कालश्यामलमेचका इत्यमरः। वानरसेनामिव सुग्रीवेणाङ्गदेनोपशोभिताम्। पक्षे। शोभना ग्रीवा यस्याः सा चासावङ्गदेन केयूरेणोपशोभिता। केयूरमङ्गदं तुल्ये इत्यमरः। रत्नावलीं शुभ्यामाह। चतुरमयीमिवेत्यन्वयः। भास्वता शोभमानेनालङ्कारेण भूषणेन। पक्षे। भास्वान् सूर्यः। भास्वद्विवस्वत्सप्ताश्वेत्यमरः। चन्द्रेणाह्लादकेन। चदि आह्लादे। स्फायितञ्चीति रक् वदनमण्डलेन। पक्षे। चन्द्रेण चन्द्रमसा। हिमांशुश्चन्द्रमाश्चन्द्र इत्यमरः। लोहितेन रक्तेनाधरपल्लवेन। रोहितो लोहितो रक्त इत्यमरः। पक्षे लोहितेन भौमेन। कुजो भौमो लोहिताङ्गो महीसुत इत्यमरः। सौम्येन मनोहरेण दर्शनेन विलोकनेन। पक्षे। सौम्येन बुधेन। रौहिणेयो बुधः सौम्य इत्यमरः। गुरुणा महता नितम्बबिम्बेन। पक्षे। गुरुणा बृहस्पतिना। गीष्पतिर्धिषणो गुरुरित्यमरः। विकचेन विकसितेन विलोचनोत्पलेन नेत्रोत्पलेन। पक्षे। विगतः कचो बृहस्पतिपुत्रो यस्माद्विकचः शुक्रः। शुक्रे केतौ च विकचे उत्फुल्ले च निगद्यते। इति विश्वः। शनैर्मन्दं चरति गच्छति मन्थरेण पादेन। मन्दा गजगामिनीति भावः। पक्षे। शनैश्चरः सौरिः। सप्ती सौरिः शनैश्चरावित्यमरः।

तमसा केशपाशेन ग्रहमयोमिव संसारभित्तिचित्रलेखामिव त्रैलोक्यसौन्दर्यसङ्केतभूमिमिव रसायनसिद्धिमिव यौवनमहायोगिनः सङ्कल्पभित्तिमिव शृङ्गारस्य निधानमिव कौतुकस्य त्रिभुवनविजयपताकामिव मकरध्वजस्याविर्भूतिमिव मनसोऽभिभूतिमिव मदनस्य स्तम्भनचूर्णमिवेन्द्रियाणां मोहनशक्तिमिव मन्मथस्य विहारस्थलीमिव सौन्दर्यस्यैकायतनशालामिव सौभाग्यस्योत्पत्तिस्थानमिव लावण्यस्याकर्षणसिद्धिमिव मनस-

---

तम इव तमस्तादृशेन केशपाशेन मार्दवदैर्घ्यश्यामतादिगुणेन। अन्यपदार्थे चक्षुर्गतिप्रतिरोधकत्वादिति भावः। कचः केशः शिरोरुहः। पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे इत्यमरः। पक्षे। तमसा राहुणा। तमस्तु राहुः स्वर्भानुरित्यमरः। सर्वत्रोपलक्षणे तृतीया। राहुकेत्वोरैकत्वात् शुक्रे केतौ च विकच इति विश्वकोशाद्विकचशब्देन वा केतोरपि संग्रहः। क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः। संसारभित्तिचित्रलेखामिव। चित्रलेखेवेयं शोभिकेति भावः। यौवनस्य रसायनसिद्धिमिव। जराव्याधिजित् सद्यश्चमत्कृतिकृत् स्वर्णरौप्यजनको वौषधिविशेषो रसायनम्। शृङ्गारस्य सङ्कल्पभित्तिमिव। सङ्कल्पः कर्म्म मानसमित्यमरः। कौतुकस्य कौतूहलस्य निधीयन्तेऽस्मिन् निधानमाश्रयः। कौतूहलं कौतुकं चेत्यमरः। मकरध्वजस्य कामस्य त्रिभुवनविजयपताकामिव। हनुमत्पताकादिवदिति भावः। पुष्पधन्वा रतिपतिर्मकरध्वज इत्यमरः। मनस आविर्भूतिमिव। मदनस्याभिभूतिमिव। अभिभवकारणमिवेत्यर्थः। इन्द्रियाणां धीन्द्रियकर्मेन्द्रियाणां स्तम्भनचूर्णमिव। एतद्दर्शनादेव स्तम्भनरूपसात्त्विकभावाविर्भाव इति भावः। मन्मथस्य मोहनशक्तिमिव। मदनो यथा जगन्मोहयति सैवेयं मूर्त्तिमतीति भावः। सौन्दर्य्यस्य विहारस्थलीमिव। विहारः क्रीड़ा तदर्थं स्थली पुरुषेणासंस्कृता भूमिस्तामिव। एतेनेयमलङ्कारादिपुरुषसंस्कारहीनापि रम्यैवेति स्वाभाविकसौन्दर्य्यातिशयो ध्वनितः। तथाच कालिदासः। सरसिजमनुविद्धं शैवलेनापि रम्यं मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति। इयमधिकमनोज्ञा वल्कलेनापि तन्वी किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥ इति सौभाग्यस्य सुभगताया एका प्रधानायतनशाला चैत्यशाला तामिव। एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा। चैत्यमायतनं तुल्ये इत्यमरः। लावण्यस्योत्पत्तिस्थानमिव। मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥ इति मेदिनी। मनस आकर्षणसिद्धिमिव। स्वर्णाकर्षणभैरवादिसिद्धिमिवेत्यर्थः।

चक्षुर्बन्धमिव मन्मथेन्द्रजालिनस्त्रिभुवनविलोभनसृष्टिमिव प्रजापतेः कन्यकामष्टादशवर्षदेशीयामपश्यत् स्वप्ने। अथ तां प्रीतिविस्फारितेन चक्षुषा पिबन्निव जनितेर्ष्ययेव निद्रया चिरसेवितया मुमुचे। विबुद्धस्तु विषसरसीव दुर्जनवचसीव निमग्नमात्मानं धारयितुं न शशाक। तथाहि क्षणमाकाशतलमालिङ्गन् प्रसारितबाहुयुगल एह्येहि प्रियतमे क्व गच्छसीति दिक्षु लिखितामिवोत्कीर्णामिव चक्षुषि निखातामिव हृदये प्रियतमामाजुहाव। ततस्तत्रैव शय्यातले निमीलितनयनो निषिद्धाशेषपरिजनो दत्तकपाटः परिहृतताम्बूलाहारादिसकलोपभोगस्तद्दिनमनयत्। तथैव निशामपि स्वप्नसमागमेच्छाभिरनैषीत्। अथ तस्य प्रियसखो मकरन्दो नाम कथमपि लब्धप्रवेशः कन्दर्प-

---

मन्मथेन्द्रजालिन इन्द्रजालविद्यानिपुणस्य चक्षुर्बन्धमिव। प्रजापतेर्ब्रह्मणस्त्रिभुवनविलोभनसृष्टिमिव। अथ स्वप्नदर्शनोत्तरं प्रीतिविस्फारितेन विकसितेन चक्षुषा तां पिबन्निव। अत एव चिरसेवितया निद्रया जनितेर्ष्ययेव। मयि विद्यमानायां मत्सम्बन्धात् प्राप्ताया-मन्यामसौ भजिष्यतीति सेर्ष्यात्वम्। सतां माने म्लाने मरणमथवा दूरगमनमिति। मुमुचे मुक्तः। स इति शेषः। विबुद्धस्तु जागरितस्तु विषसरसीव दुर्जनवचसीव निमग्नमात्मानं धारयितुं सावधानतया व्यवहारे प्रवर्त्तयितुं न शशाक। चक्षुःप्रीतिरित्यादिदशावस्थासु उन्मादावस्थां वर्णयति। क्षणं तावत्कालमाकाशतलमालिङ्गन्। आकाशतलालिङ्गनेन मोहवशात् परितो दृश्यमानायाः प्रियतमाया आलिङ्गनं लक्ष्यते। अतएवाग्रे क्व गच्छसि प्रियतम इत्याद्युक्तम्। प्रसारितबाहुः। एह्येहीति सम्भ्रमे द्वित्वम्। प्रियतमे क्व गच्छसीति दिक्षु लिखितामिव। चक्षुष्युत्कीर्णामिव विक्षिप्तामिव। कॄ विक्षेपे। हृदये निखाता-मिव प्रियतमामाजुहाव। ततस्तत्रैव शय्यातले निमीलितनयनो निषिद्धाशेषपरिजनो निवा-रितसकलसेवकवर्गो दत्तकपाटः। परिहृतताम्बूलादिसकलोपभोगः। व्यग्रत्वादिति भावः। तथा च भारविः। आतपे धृतिमता सह वध्वा यामिनीविरहिणा विहगेन सेहिरे न किरणा हिमरश्मेर्दुःखिते मनसि सर्वमसह्यम्॥ इति तद्दिवसमनयत्। कपाटमररं तुल्ये इत्यमरः। तथैव पूर्वोक्तप्रकारेणैव तस्याः स्वप्ने समागमस्येच्छाभि-र्निशामप्यनयत्। अथ तादृगवस्थोत्तरं तस्य कन्दर्पकेतोः प्रियसखो मकरन्दो नाम कथमपि कपाटविघटनादिमहायासेन लब्धप्रवेशः। कन्दर्पस्याग्रकपुरस्यान्तःकरणं कन्दर्प-

सायकप्रहारपरवशं कन्दर्पकेतुमुवाच। सखे! किमिदमसाम्प्रतमसाधुजनोचितमध्वानमाश्रितोऽसि तवैतच्चरितमालोक्य वितर्कदोलासु निवसन्ति सन्तः खलाः पुनस्तदनिष्टमनुचितमेवावधारयन्त्यनिष्टोद्भावनरसोत्तरं हि खलहृदयं को नामास्य तत्त्वनिरूपणे समर्थः। तथाहि भीमोऽपि न वकद्वेष्टाश्रयाशोऽपि मातरिश्वातिकटुरपि महारसः सर्षपस्नेह इव करयुगललालितोऽपि शिरसा धृतोऽपि न कटुत्वं जहाति तालफलरस इवापातमधुरः परिणामविरसस्तिक्तश्च पादपराग इवावधृतो मूर्धानं कषाययति विषतरुप्रसव इव यथायथानुभूयते तथा

---

केतुमुवाच। प्रियसख इत्यत्र राजाहःसखिभ्यष्टजिति समासान्तष्टच्। सखे! किमिदमसाम्प्रतमनुचितमसाधुजनोचितमध्वानं व्यवहारमाश्रितोऽसि। सन्तस्त्वं प्रज्ञासत्त्वशोरतिभूमिरेतच्चरितमालोक्य वितर्कदोलासु संशयदोलासु निवसन्ति। संशयिता भवन्तीति भावः। काव्यलिङ्गेनाह। खलाः पुनस्तदनिर्वाच्यमनिष्टमेवावधारयन्ति निश्चिन्वन्ति। अनिष्टोद्भावनेऽनभिमतप्रकाशने यो रसोऽनुरागस्तदुत्तरं प्रधानं यस्य तादृक्। अस्य खलस्य। भीमोऽपि युधिष्ठिरानुजोऽपि वकद्वेषी वकद्वेष्टा नेति विरोधः। भीमो भयानकोऽपि नवकान् स्तुत्यान् द्वेष्टि तादृक्। अपिश्चार्थे। इत्यविरोधः। णु स्तवने। आश्रयाशो वह्निरपि मातरिश्वा वायुरिति विरोधः। श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः। इत्यमरः। आश्रयमश्नाति तादृशः। यमाश्रयति तस्यैव भक्षक इत्यर्थः। आश्रयाशो हुतवहे भवेदाश्रयनाशके। इति विश्वप्रकाश। मातरि जनन्यां तत्सदृशे पोषके। श्वा कुक्कुरः। अनुचिताचरणत्वात् तत्सदृश इति भावः। इत्यविरोधः। अतिकटुर्महारसः। अतिकटोर्महारसत्वं विरोधः। अतिकटुरतिकटुप्रकृतिर्महांश्चासावरसश्चेति महारसः। सर्षपस्नेह इव करयुगललालितोऽपि शिरसा धृतोऽपि पादप्रणामादिना। पक्षे! अधिकरणस्य करणत्वेन वर्णनम्। शिरसि धृतोऽपि कटुत्वं न जहाति। काटवमिति पाठस्तस्याप्यसारकत्वादुपेक्ष्यः। तालफलरस इवापातमधुरो भोजनप्रारम्भ एव मधुरः परिणामविरसस्तिक्तश्च। पक्षे। पातो दोषस्तमभिव्याप्यापातं मधुरः। हिताभासाचरणेन मधुरः। परिणामि दोषप्राप्तोत्तरं विरस उदासीनः। तिक्तः प्रतिजनं मर्मप्रकाशकः। पादपराग इव चरणरेणुरिवावधूतः धिक्कृतस्तिरस्कृतश्च। मूर्धानं शिरः कषाययति धूस-

तथा मोहमेव द्रढ़यति न वारिविरहोऽस्य जायते नीचदेशस्येव निदाघदिवस इव बहुमत्सरो वहति तापं सुमनसामन्धकार इव दोषानुबन्धचतुरो विश्वकर्मावलोपनोद्यतश्च विरूपाक्षोऽपि चक्रधरः शक्राश्व इवोच्चैःश्रवा नदेशजप्रशंसी च सरस्येव विभिन्नस्यापि सतः स्नेहं दर्शयतोऽपि तक्राट इव हृदयं विलोडयति

---

रयति पीड़यति च। परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि। पादः पदङ्घ्रिचरणोऽस्त्रियाम्। मूर्धा ना मस्तकोऽस्त्रियामिति विश्वमरः। विषतरुप्रसव इव यथा यथानुभूयते सेव्यते तथा तथा मोहमेव मूर्च्छां वैचित्यं वा द्रढ़यति स्थिरीकरोति। नीचदेशस्येव निम्नभूभागस्येव वारिविरहो जलविरहो न जायते। पक्षे। अव्ययानामनेकार्थत्वाद्वाशब्द एवार्थे। न वा नैवास्य खलस्यारिविरहः। शत्रुविरहो जायते। सर्वनाशोद्यतत्वादिति भावः। रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः। इत्यमरः। निदाघदिवस इव ग्रीष्मर्तुदिवस इव बहुमत्सरो बहुमक्षिकः। सुमनसां पुष्पाणां तापं वहति। मक्षिका मत्सरा ज्ञेया भ्रमराली च सा मता। इत्युत्तरतन्त्रम्। मत्सरः कृपणे काये मक्षिकासु च मत्सरः। इति धरणिः। स्त्रियः सुमनसः पुष्पम्। निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः। इति द्वयोरमरः। पक्षे। बहुमत्सरो बहुमात्सर्यवान् क्रोधी वा। सुमनसां शुद्धान्तःकरणानाम्। मत्सरोऽन्यशुभद्वेषे इत्यमरः। क्वचित् क्रोधोऽपि मत्सर इति रत्नकोषः। अन्धकार इव दोषा रात्रिस्तस्या अनुबन्धे चतुरः। विश्वकर्मादित्यस्तस्यावलोपनमस्तमनं तत्रोद्यतः। विश्वकर्मा देवशिल्पी विश्वकर्मा दिवाकरः। इत्युत्तरतन्त्रम्। पक्षे। दोषस्यानुबन्ध आरोपे चतुरः। विश्वेषां कर्मक्रिया तस्या अवलोपनं छेदनं तत्रोद्यतः। विरूपाक्षः शिवश्चक्रधरो विष्णुरिति विरोधः। विरूपाक्षो विषमव्यवहारः। चक्रधरो दम्भिदधरः। चक्रो ग्रामार्थप्रकटव्यवहारे च पामके। इति मेदिनीकारः। अजावनी समूहे च दम्भभेदरथाङ्गयोः। शस्त्रभेदे च सैनायां चक्रं चापि विशङ्कके॥ इति रन्तिदेवः। इति परिहारः। शक्राश्व इवेन्द्राश्व इवोच्चैःश्रवा उच्चैःश्रवःसज्ञकः। इव उच्चैःश्रवा इतीन्द्रप्रकरणेऽमरः। नदेशान् समुद्राज्जातस्तादृशवासी प्रशंसावांस्तथाभूतः। उच्चैःश्रवा बधिरः। परकीयकार्यविषये देशजान् प्रशंसितुं शीलमस्य तादृशो न भवति तथाविधः। सरस्येव दध्यग्रभागस्येव विभिन्नस्यापि सत्रतस्यापि सतः साधोर्विद्यमानस्य च स्नेहमनुरागं चैक्कण्यं दर्शयतोऽपि तक्राट इव मन्थान इव हृदयं विलोडयति। सरो दध्यग्रभागः स्यादिति रत्नकोषः। भिन्नौ दारितसङ्गताविव्यमरः। स्नेहोऽनुरागचै-

यज्ञबलिरिवात्मघोषमुखरो मण्डलभ्रमणकथकश्च मत्तमातङ्ग इव स्ववशा-लोलमुखोऽधरीकृतदानश्च वृषभ इव सुरभियानविकलः कामीव गोत्रस्खलनविधुरो वामाध्वानुरक्तश्चाजीर्णविकार इव कलेवरे वचसि मन्दिमानमावहति वञ्चक इव कटपले रक्तो विभावरीरक्तश्च परेत इव बन्धुतापदर्शनः परभृरिव भद्रश्रियमपि

---

कण्ठं तैलेऽपि च निगद्यते। इति धरणिः। वैशाखो दधिचारः स्यात् तक्राटकरघर्षणी। इति हारावली। यज्ञबलिरिवात्मघोषेण काकेन मुखरः काकशब्देन सशब्दः। मण्डल-भ्रमणं कुक्कुरभ्रमणं तत्कथकस्तत्सूचकः। ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि। इत्यमरः। कौलेयकः सारमेयो मण्डलः श्वा गतत्रपः। इति व्याडिः। पक्षे। आत्म-घोषेणात्मस्तुत्या मुखरः। मण्डले देशादौ भ्रमणं तत्कथकः। मत्तमातङ्ग इव स्ववशायां निजकरिण्यामालोलं मुखं यस्य सः। अधरीकृतदानः। मदजलस्यातिवर्षणादधरीकर-णम्। पक्षे। सुष्ठुवशमश्वाध्यवाचित्वादालोलं मुखं यस्य सः। अधरीकृतं दानं वित-रणं येन। वृषभ इव सुरभेर्गोर्यानेन गमनेन विकलो विह्वलस्तदनुधावनेन वा विह्वलः। पक्षे। सुरभिया देवभयेन न विकलः। भीतिर्भीः साध्वसं भयमित्यमरः। कामीव गोत्रस्खलनं नामस्खलनं तेन विधुरः। वामानां स्त्रीणां मध्वा मार्गस्तत्रानुरक्तः। प्रतीप-दर्शिनी वामा वनिता महिला तथा। गोत्रं तु नाम्नि चेत्युभयत्राप्यमरः। पक्षे। गोत्रस्खलनं वंशजस्खलनम्। वामाध्वा विपरीताचरणम्। वामौ वल्गुप्रतीपौ चेत्यमरः। अजीर्ण-विकार इव कलेवरे शरीरे वचसि वचने मन्दिमानमावहति। अथ कलेवरम्। गात्रं वपुः संहननमित्यमरः। पक्षे। कलेऽव्यक्तमधुरे वरे श्रेष्ठे वचसि वचने मन्दिमानमाव-हति वाचाट इति भावः। वञ्चक इव शृगाल इव श्वेव वा कटपले मृतमांसे रक्तः। विभावर्यां रात्रौ रक्तश्च। शृगालवञ्चकक्रोष्टु विभावरीतमस्विन्यौ रजनीत्युभयत्रामरः। अप्रतारकचौरेषु वञ्चकः परिकीर्त्तितः। इति शाश्वतः। कटः समयबन्धेऽपि द्वयेऽपि मृतकेऽपि च। इति विश्वः। पलः प्रतारणे काले श्यामांसे पलं मतम्। इति धरणिः। पक्षे। कटे समयबन्धे पलः प्रतारणं तस्मिन् रक्तः शपथपूर्वकप्रतारक इति भावः। विभौ स्वामीश्वरिः यद्वा रक्तो धनलोभादिना। अरी रक्त इत्यत्र रोरीति लोपे द्रलोप इति दीर्घः। समयाः शपथाचारकालसिद्धान्तसंविदः। इत्यमरः। परेत इव बन्धुताया बन्धु-समूहस्यापगतं दर्शनं यस्य। ज्ञातेयं बन्धुता तेषां क्रमाद्भावसमूहयोः। इत्यमरः। ग्रामजन-बन्धुभ्यस्तलिति तल्प्रत्ययः। पक्षे। बन्धून् तापयति तादृशं दर्शनं यस्य। परभृरिव

खण्डयति कुद्दाल इव दलितगोत्रः क्षमाभाजः प्राणिनो निकृन्तति रतकील इव जघन्यकर्मलग्नो क्षेपयति साधून् दुष्टशूर्पश्रुतिरिव काननरुचिरनुगतमपि यवसं ततं नानुमोदते। अबीजादेव जायन्तेऽकाण्डादेव प्ररोहन्ति खलव्यसनाङ्कुरा दुरुच्छेदा भवन्त्यसतां हि हृदि प्रविष्टो दोषलवः करालायते। सतां तु हृदि न विशत्येव यदि कदाचिद्विशति पारद इव क्षणमात्र-

---

भद्रश्रियं चन्दनं खण्डयति। भद्रश्रीश्चन्दनोऽस्त्रियामित्यमरः। पक्षे। भद्रं कल्याणम्। श्रियं लक्ष्मीम्। शिवं भद्रं कल्याणं मङ्गलं शुभमित्यमरः। यद्वा भद्रश्रियं साधुसम्पदम्। सश्रीके चन्दनेऽपि स्याद्भद्रश्रीः साधुसम्पदि। इति धरणिः। कुद्दाल इव दलिता गोत्रा पृथ्वी येन। क्षमां पृथ्वीं भजन्ति तादृशान् प्राणिनो वृक्षादीन् निकृन्तति छिनत्ति। वृक्षादीनां प्राणित्वं भवेदहिंसार्थस्य नेति वार्त्तिक व्याकरे स्पष्टम्। कुदारीति भाषायाम्। पक्षे। दलितगोत्रो नाशितवंशजः। क्षमाभाजः शान्तियुतान् प्राणिनो मनुष्यान्। क्षितिक्षान्त्योः क्षमेत्यमरः। रतकील इव कुक्कुर इव जघन्यकर्मलग्नो मार्गे एव सुरतादौ प्रवृत्तः। क्षेपयति साधून्। कुक्कुरो रात्रिजागरः। रसनालिट् रतपराः कौलशायिश्वानस्तुकाः। इति हेमचन्द्रः। रतपरा रतशब्दात् पराः कौलादयः। तथा च रतकौलादयश्चत्वार शब्दा इति कोशार्थः। पक्षे। जघन्यकर्म्म नीचकर्म्म। दुष्टशूर्पश्रुतिरिव दुष्टगज इव कानने वने रुचिर्यस्य। अनुगतम्। ततं विस्तृतम्। यवसं तृणम्। नानुमोदते। द्विपायिशूर्पश्रुतिकुम्भिलोमजा। इति हारावली। यवसं तृणमर्जुनमित्यमरः। पक्षे। कौपदाननरुचिर्वदनकान्तिर्यस्य। ईषदर्थे चेति कादेशः। लोकानां धिक्काराद्धीनकान्तिरिति भावः। अनुगतमपि यवसं दत्तं ततं वीणादिवाद्यं च नानुमोदते। यवसो तृणघासयोः। ततं वीणादिवाद्येऽपि विस्तारेऽपि ततं मतम्। इत्युभयत्र विश्वः। खलव्यसनाङ्कुरा अबीजादेवाकारणादेव जायन्ते। अकाण्डादेवाप्रस्तावादेव प्ररोहन्ति। अतएव दुरुच्छेदा भवन्ति। यो हि बीजाज्जायते काण्डात् स्कन्धात् प्ररोहति स सूच्छेदी भवति मूर्त्तत्वादिति भावः। हेतुर्ना कारणं बीजम्। अस्त्री प्रकाण्डः स्कन्धः स्यादित्युभयत्रामरः। असतां हृदि प्रविष्टो दोषलवः करालायते भयावहो भवति। सतां हृदि तु न विशत्येव। दोषलव इति शेषः पूर्वोत्तरयोरपि। यदि कदाचिद्विशति। पारद इव क्षणमात्रमपि नावतिष्ठते। रसः सूतश्च पारद इत्यमरः। हृदय इति शेषः। अथ यदि वदति किमर्थमुपदिश्यसि। असह्यं वा न तमुपदेशमुरीकरोमीति तत्राह। साधवः

मपि नावतिष्ठते साधवो मृगा इव विनोदविन्दोः श्रवणवशगाः सुखं जनाः शरत्समया इव भवादृशा मित्रस्य हृदयं हरन्ति न च सचेतना विसदृशमुपदिशन्त्यचेतनानामपि मैत्री समुचितपक्षे निक्षिप्ता। तथाहि माधुर्य्यशैत्यशुचित्वसन्तापशान्तिभिः पयः पय इवेति मित्रतामुपगतस्य दुग्धस्य तत्सङ्गमादवर्धितस्य क्वाथेन ममैव पुरो युक्तः क्षय इति विचिन्त्येव वारिणापि क्षीयते। तदिदमसाम्प्रतमाचरितं सखे! गृहाण साधुजनोचितमध्वानं साधवो हि दिङ्मोहात् परमुत्पथप्रवृत्ता भवन्तीत्यादि वदति तस्मिन् कथमपि स्मरशरनिकरप्रहारपरवशः परिमिताक्षरमुवाच कन्दर्प-

---

सन्तो मृगा इव हरिणा इव विनोदविन्दोर्विनोदवेदितुर्मृगरमणपटोः पुंसः श्रवणेनाकर्ण-नेन वशगा भवन्ति। ज्ञाता तु विदुरो विन्दुरित्यमरः। वीणा श्रूयते मृदङ्गः श्रूयत इत्यादौ तद्ध्वनिवत् पुंसः श्रवणेन तद्गीतश्रवणं लक्ष्यते। तथाच माघः। श्रुश्राव भूमिपतिभिः क्षणवीतनिद्रैरश्नन् पुरो हरितकं मुदमादधानः। ग्रीवाग्रलोलकलकिङ्किणि-कानिनादमिश्रं दधद्ध्वनमनुवं रमश्वः। इति। पक्षे। विनोदविन्दोर्ज्ञातुः। श्राख्यातोपयोग इति पञ्चमी। श्रवणेन समुपदेशश्रवणेन वशगास्तदधीनास्तादृशाः शरत्समया इव भवादृशा जनाः सुखं जनयन्ति। पिण्डीमित्यादौ भक्षणादिक्रियाक्षेपवत्। सुखमित्यनेन जननक्रियाक्षेपः। अतएव मित्रस्य हृदयं हरन्ति। पक्षान्तरे। शरत्समयाः सुखञ्जनाः शोभनाः खञ्जना येषु तादृशाः। खञ्जरीटस्तु खञ्जन इत्यमरः। सचेतना मित्रस्येति शेषः। विसदृशमयोग्यं नोपदिशन्ति। अचेतनानामपि मैत्री समुचितपक्षे योग्यपक्षे निक्षिप्ता तर्हि सचेतनमैत्र्याः का कथेति भावः। समानशीलव्यसनेषु सख्यमितीममर्थं द्योतयन्नुभयसाधारणानि विशेषणान्याह। माधुर्य्येत्यादि। माधुर्य्य शैत्य शुचित्व सन्तापशान्तिभिर्गुणैः पयोजलं पय इव दुग्धमिवेति मित्रतामुपगतस्य तत्सङ्गाद् दुग्धसङ्गादवर्धितस्य बहुमूल्यतामापन्नस्य पुरः पूर्वं ममैव क्षयो युक्त इति विचार्य्य वारिणा क्षीयते। भावे प्रत्ययः। मीलितालङ्कारोऽत्र। समेतलक्षणा वापि वस्तुना यन्निगुह्यते। निजेनागन्तुना वापि तन्मीलितमिति स्मृतम्॥ इति लक्षणात्। तत् तस्मादिदमाचरितमसाम्प्रतमयुक्तम्। सखे! साधुजनोचितमध्वानं व्यवहारं गृहाण। साधवो हि दिङ्मोहात् परं केवलमुत्पथप्रवृत्ता उन्मार्गप्रवृत्ता भवन्ति नत्वसद्व्यवहार इत्यर्थः। इत्यादि तस्मिन् मकरन्दे वदति सति।

केतुः । वयस्य ! दितिरिव शतमन्युसमाकुला भवति मनोवृत्तिः । नायमुपदेशकालः पच्यन्त इवाङ्गानि क्वथ्यन्त इवेन्द्रियाणि भिद्यन्त इव मर्माणि निःसरन्तीव प्राणा उन्मूल्यन्त इव विवेका नष्टा स्मृतिः । तदधुना यदि त्वं सहपांशुक्रीडनसमदुःखसुखोऽसि तदा मामनुगच्छेत्युक्त्वा परिजनालक्षितस्तेन सह नगरान्निर्जगाम । अनन्तरं कतिपयनल्वशतमध्वानं गत्वा-नभस्यवचनसंहृतब्रह्माण्डगतशिखरसहस्रः कन्दरान्तराल लतागृहसुखसुप्त-विद्याधर-मिथुनगीताकर्णनसुखितचमरीशतमारणोत्सुकितशबर-शतसम्बाधकच्छः कटककरिकराकृष्टभग्न स्यन्दमानहरिचन्दना-

---

शरशरनिकरप्रहारपरवशः कामबाणव्यथाव्याकुलः । कथमपि महाक्लेशात् परिमिताक्षरमुवाच । वयस्य ! सखे ! चित्तवृत्तिर्दितिरिव दैत्यजननीव शतमन्युनेन्द्रेण समाकुला व्याकुला भवति । पक्षे । शतसंख्याका मन्यवः समाकुला शाकपार्थिवादिः । दितेर्गर्भनाशाय दितिप्रमादाद्दितिगर्भे प्रविष्टः शक्र एकं गर्भं सप्तधा विभज्य सप्तधा विभक्तं प्रतिव्यक्ति सप्तधा बभञ्जेति । त एकोनपञ्चाशन्मरुतो बभूवुरिति पुराणे प्रसिद्धम् । शतमन्युर्दिवस्पतिः । मन्युशोकौ तु शुक् स्त्रियाम् । वयस्यः स्निग्धः सवया इति चामरः । स्वस्थे चित्ते बुद्धयः सम्भवन्तीत्याह । नायमुपदेशकालः । कुतः । अङ्गानि पच्यन्त इव शिथिलावयवानीव भवन्तीत्यर्थः । कर्मकर्तरि साधुः । एवमग्रेऽपि । इन्द्रियाणि क्वथ्यन्त इव । क्वाथपाकयोर्भेदान्न पौनरुक्त्यम् । मर्माणि भिद्यन्त एव विदीर्णानि भवन्तीत्यर्थः । प्राणा निःसरन्तीव । विवेका उन्मूल्यन्त इव । उत्पाट्यन्त इव । स्मृतिर्नष्टा । मागधी रीतिरत्र । ततोऽधुना यदि पांशुक्रीडने समदुःखसुखः । एतेन बाल्यसख्यत्वं ध्वनितम् । राजकुमाराणामेतादृक्क्रीडासम्भवेऽपि लोकप्रवादानुकरणम् । तेन लोकोक्तिरलङ्कारोऽत्र । लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते । इति लक्षणात् । तदा मामनुगच्छेत्युक्त्वा परिजनैरनालक्षितस्तेन मकरन्देन सह नगरान्निर्जगाम । अनन्तरं नगराद्बहिर्निर्गमनोत्तरं कतिपयनल्वशतं तावत्परिमितमध्वानं मार्गं गत्वा साध्यामिति शेषः । विन्ध्यो नाम गिरिरदृश्यतेति सम्बन्धः । किष्कुर्हस्ते वितस्तौ च । नल्वः किष्कुचतुःशतम् । इत्यमरः । नभस्यवचनेन संहृतं ब्रह्माण्डगतं शिखरसहस्रं येन सः । कूटोऽस्त्री शिखरं शृङ्गमित्यमरः । अनुप्रासेनाह । कन्दरा दरी तदन्तराले लतागृहे तत्र सुखेन सुप्तानि

मोदवाहि गन्धवाहशिशिरितशिलातलः सुदूरपतनभग्नताल-फलरसार्द्रकरतलास्वादनोत्सुकशाखामृगः प्रलम्बमाननिर्झरोप-विष्टजीवञ्जीवमिथुनलेलिह्यमानविविधफलरसामोदसुरभितपरि-सरः सरभसकेसरिसहस्रखरनखरधाराविदारितमत्तमातङ्गकुम्भ-स्थलविगलितमुक्ताफलशबलितशिखरतया शिरोलग्नं तारागण-मिवोद्वहन् सुग्रीव इव ऋक्षगवयशरभकेसरिकुमुदसेव्यमान-

---

विद्याधरमिथुनानि तेषां गीतं गानं तदाकर्णनेन मुखितं चमरीणां मृगभेदस्त्रीणां शतं तन्मारणोत्सुकितं शबरशतं तेन सम्बाधः सङ्कटः कच्छतटो यस्य सः। दरी तु कन्दरो वा स्त्री। निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः। भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः॥ गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः। सङ्कटं ना तु सम्बाधः कलिलं गहनं समे। इति [illegible]। [illegible] कच्छरोधसी। तटं तीरं प्रतीरं चेति हैमः। कच्छाखिरिरिति [illegible]। कटैऽद्रिनितम्बे करिकरैः हस्तिशुण्डाभिराकृष्टान्यत-एव भग्नान्यतएव खण्डमानानि प्रस्रवमाणानि हरिचन्दनानि तेभ्य आमोदोऽतिनिर्हारि-गन्धवाहो [illegible] वायुस्तेन शिशिरितं शिशिरवदाचरितं शिलातलं यस्य सः। कटकोऽस्त्री नितम्बोऽद्रेः। आमोदः सोऽतिनिर्हारी। गन्धवाहानिलाशुगाः। सुषीमः शिशिरो जड़ः। तुषारः शीतलः शीतः। पञ्चैते देवतरवो मन्दारः पारिजातकः। सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्॥ इति पञ्चममरः। हस्तिनासा करः शुण्डा हस्त इति हैमः। स्यन्द प्रस्रवणे। सुदूरपतनेन भग्नानि तालफलानि तेषां रसेनार्द्रयोः करतलयोरास्वादनेन लेहनेनोत्सुकाः शाखामृगा वानरा यत्र सः। हयरागाश्रयस्तथा। शाखामृगवलीमुखाः मर्कटो वानरः कीश इत्युभयत्रामरः। प्रलम्बमानान्यतएव निर्झरे-षूपविष्टानि यानि जीवञ्जीवमिथुनानि चकोरमिथुनानि तैर्लेलिह्यमानानि पुनः पुनरा-स्वाद्यमानानि तान्यानि च यानि विविधफलानि तेषां रसामोदेन सुरभितः परिसरः प्रान्तदेशो यस्य। लेलिह्यमानेति यङ्लुगन्तात् कर्मणि शानच्। जीवञ्जीवश्चकोरकः। पर्य्यन्तभूः परिसर इत्युभयत्रामरः। सरभसं सवेगं केसरिसहस्रस्य सिंहसहस्रस्य खर-नखरधारया विदारितानि मत्तमातङ्गकुम्भस्थलानि तेभ्यो विगलितानि मुक्ताफलानि तैः शबलितशिखरतया शिरोगतं तारागणमिव नक्षत्रसमूहमिवोद्वहन्। कर्बुरः शबलः [illegible] हरिः। भ्रकुटी नक्षत्रोऽश्विन्याम्। नक्षत्रमृक्षं भं तारेति विश्वमरः। पुनः स [illegible]। सुग्रीव इव। ऋक्षो जाम्बवान् गवयः शरभः केसरी कुमुद एतन्नामभिर्वानरैः सेव्य-

पादच्छायः पशुपतिरिव नागनिःश्वाससमुत्क्षिप्तभूतिर्जनार्दन इव विचित्रवनमालः सहस्रकिरण इव सप्तपत्रस्यन्दनोपेतो विरूपाक्ष इव सन्निहितगुहः शिवानुगतश्च कामीव कान्तारोषरसानुगतः समदनश्च श्रीपर्वत इव सन्निहितमल्लिकार्जुनो नरवाहनदत्त इव प्रियङ्गुश्यामासनाथः शिशुरिव कृतधात्रीधृतिर्वीरसंरम्भ इव गैरिकारुणप्रभापाटलितवनराजिः कृष्णपक्ष इव

---

मानपादच्छायः। ते च रामायणे। गजो गवाक्षो गवयः शरभो गन्धमादनः। इति। पक्षे। ऋक्षो भल्लूकः। गवयो वनगवः। शरभः कुञ्जरद्विट्। केसरी सिंहः। कुमुदं कैरवं दिग्गजो वा। तैः सेव्यमाना पादानां प्रत्यन्तपर्वतानां छाया यस्य सः। ऋक्षाच्छभल्लभल्लूकाः। पादाः प्रत्यन्तपर्वताः। इत्युभयत्रामरः। गवयः स्याद्वनगवो गोसदृक्षोऽश्ववारणः। शरभः कुञ्जरारातिरुत्पादकोऽष्टपादपि। इत्युभयत्र हेमः। कपीन्द्रः कुमुदः कोऽपि कुमुदः दिग्गजः। इति शाश्वतः। पशुपतिरिव शिव इव नागनिःश्वासेन सर्पनिःश्वासेन समुत्क्षिप्ता भूतिर्भस्म यस्य सः। पक्षे। नागनिःश्वासेन गजनिःश्वासेन समुत्क्षिप्ता भूतिः सम्पत्तिर्यस्य सः। यद्वा। नागानां निधिस्थानस्थितसर्पाणां निश्वासेनेत्यादि। जनार्दन इव विष्णुरिव विचित्रा वनमाला यस्य सः। आपादपद्मं या माला वनमालेति सा स्मृता। इति शाश्वतः। पक्षे। विचित्रा वनमाला वनपरम्परा यस्य सः सहस्रकिरण इव सूर्य इव सप्त पत्राणि वाहनानि यस्मिन् तादृशो रथो यस्य। पत्रं वाहनपक्षयोरित्यमरः। पक्षे। सप्तपत्रो विषमच्छदः। स्यन्दनस्तिनिशः। सप्तपर्णो विशालत्वक्। तिनिशे स्यन्दनो नेमिरित्युभयत्रामरः। विरूपाक्ष इव शिव इव सन्निहितो गुहः कार्त्तिकेयो यस्य सः। शिवया पार्वत्यानुगतश्च। पक्षे। सन्निहिता गुहा गह्वरं यस्य सः। शिवाभिधानीभिः क्रोष्टीभिरनुगतश्च। शिवा गौरी शिवा क्रोष्टी भवेदामलकी शिवा। इति शाश्वतः। देवखातबिले गुहा। गह्वरम्। शिवा गौरी फेरवयोरित्युभयत्रामरः। श्रीपर्वत इव सन्निहितो मल्लिकार्जुनो यस्य। मल्लिकार्जुनो नाम हरः। पक्षे। सन्निहितौ मल्लिकार्जुनौ यस्य। तृणशून्यं मल्लिकायां त्रिषु स्यात् केतकीफले। इति विश्वमेदिन्यौ। नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः। इत्यमरः। कामीव कामुक इव कान्तायां रोषरसाभ्यामनुगतः। समदनश्च। पक्षे। कान्तारमूषररसाभ्यामनुगतः। समदनः सधत्तूरः। धत्तूरः कनकाह्वयः। मातुलो मदनश्च। कान्तारं वर्त्म दुर्गमम्। ऊषरा-

बहुलतागहनः कर्ण इवानुभूतशतकोटिदानो भीष्म इव शिखण्डिमुक्तैरर्द्धचन्द्रैराचितः कामसूत्रविन्यास इव मल्लनागघटितः कान्तारसामोदश्च हिरण्यकशिपुरिव शम्बरकुलाश्रयो गैरिकव्याजाद्रविरथमार्गमार्गणार्थमिवारुणेनोपास्यमानः शिखरगतसूर्याचन्द्रमस्तया विस्तारितलोचनोऽगस्त्यमार्गमिवोद्वीक्षमाणः स्रस्तान्त्रजाल इव जरदजगरभोगैः कुम्भकर्ण इव

---

नूपुरौ द्वावप्यन्यलिङ्गाविति विश्वमरः। नरवाहनदत्तनन्नामको राजा तद्वत् प्रियङ्गुश्यामया तन्नामकस्त्रिया सनाथः। पक्षे। प्रियङ्गुः फलिनी। श्यामा रोचनी। प्रियङ्गुः फलिनी फलीत्यमरः। विभण्डी रोचनी श्यामेति च। श्वेतविधारिति ख्याता। शिशुरिव बालक इव कृता धात्र्या आमलक्या धृतिरवस्थानं येन। पक्षे। धात्र्युपमाता। धात्री स्यादुपमातापि क्षितिरप्यामलक्यपि। इत्यमरः। वासरारम्भ इव गैरिकारुणप्रभया पाटलिता वनराजिर्वनपरम्परा जलसंहतिर्वा यस्य। श्वेतरक्तस्तु पाटल इत्यमरः। अव्यक्तरागस्त्वरुण इति च। पक्षे। गैरिकवदरुणस्य सूर्यसूतस्य प्रभा तया सूर्यसूतोऽरुणोऽनूरुरित्यमरः। कृष्णपक्ष इव बहुलता कृष्णता तया गहनः। भावे तल्। बहुलः कृष्णपक्षेऽग्नौ शितौ च बहुला गवि। इति विश्वप्रकाशः। कौशे शितौ कृष्णे। पक्षे। बहुलताभिर्गहनः सान्द्रः। वल्ली तु व्रततिर्लतेत्यमरः। कर्ण इवानुभूतं शतकोटीनां तत्संख्याकधनानां दानं वितरणं येन। पक्षे। अनुभूतं शतकोटिना वज्रेण दानं येन। दो अवखण्डने। शतकोटिः स्वरुः शम्ब इत्यमरः। भीष्म इव शान्तनव इव शिखण्डिमुक्तैरर्द्धचन्द्रैस्तदाकारैर्बाणैराचितो व्याप्तः। पक्षे। शिखण्डो बर्हं तदस्ति येषां ते शिखण्डिनो मयूरास्तैर्मुक्तैरर्द्धचन्द्रैरर्द्धमेचकाद्यैः पक्षैः। अर्द्धचन्द्रेण तदाकारयुक्ता लक्ष्यन्ते। शिखण्डस्तु पिच्छबर्हे नपुंसके। समौ चन्द्रकमेचकाविति द्वयोरमरः। कामसूत्रविन्यास इव मल्लनागेन मुनिविशेषेण। पक्षे। गजविशेषेण। घटितो रचितो युक्तश्च। मल्लनागोऽभ्रमातङ्गे वात्स्यायनमुनावपि इति विश्वप्रकाशः। कान्तानां रसामोदी शृङ्गारहर्षौ येन। पक्षे। कान्तारे दुर्गवर्त्मनि कानने वा सामोदोऽतिसुगन्धः। हिरण्यकशिपुरिव शम्बरो दैत्यविशेषस्तत्कुलाश्रयः। पक्षे। शम्बरो हरिणविशेषो जलं वा द्रव्यं वा। रङ्कुशम्बररौहिषाः। नीरक्षीराम्बुशम्बरमित्युभयत्रामरः। शम्बरं सलिले वित्ते बौद्धव्रतविशेषयोः। शम्बरो दैत्यहरिणमत्स्यशैलजिनान्तरे। इति विश्वप्रकाशः। गैरिकव्याजाद्रविरथमार्गस्य मार्गणार्थमन्वेषणार्थमिवारुणेनानूरुणोपास्यमानः। मृग अन्वेषणे। शिखरा गतसूर्याचन्द्रमस्तया। देवतावन्द्वे चेत्या-

दन्तान्तरालगतवानरव्यूहः पिण्डालक्तकरागाङ्कितपादपङ्क्ति-सूचितसञ्चरितशचीपतिवारविलासिनीसङ्केतकेतकी-मण्डपोऽकु-लीनोऽपि सद्वंशभूषितो दर्शिताभयोऽपि मृत्युफलदायी सप्रस्थो-ऽप्यपरिमाणः सनदोऽपि निःशब्दो भीमोऽपि कीचकसुहृत् पिहिताम्बरोऽप्युल्लसदंशुको विन्ध्यो नाम महागिरिरदृश्यत। यश्च प्ररूढगुल्मतयेव दृश्यमानबहुधातुविकारः साधुरिव सानुग्रह-

---

नङ्। विस्तारितलोचनो विकासितनेत्रोऽगस्त्यमार्गमुद्वीक्षमाण इव। यावदहमागच्छामि तावत् त्वमुपविशेत्युक्त्वा गतो मुनिरायाति न वेति मार्गावलोकनमिति पुराणप्रसिद्धम्। अरदजगरभोगैर्बृहद्युशरीरैः ससान्त्रजालो विगलितान्त्रसमूह इव। अन्त्रं पुरीतत्। इत्यमरः। तिलित्सः स्यादजगरे शयुर्वाहस इत्युभौ। इति च। कुम्भकर्ण इव दन्तान्त-राले दशनान्तराले गतो वानरव्यूहो यस्य। पक्षे। दन्तः कटकः सानुतिर्यग्विनिर्गतः शिलाविशेषो वा। तदन्तरालगतवानरव्यूहः। दन्तो गिरिनितम्बे च दशने सानुनि स्मृतः। इति विश्वः। दन्तकास्तु बहिस्तिर्य्यक्प्रदेशान्निःसृता गिरेः। इति हैमः। पिण्डीभूतमल-क्तकं पिण्डालक्तकं तद्रागेणाङ्कितानां पादानां चरणानां पङ्क्तिभिः परम्पराभिः सूचितं सञ्चरितं सञ्चरणं येषु। भावे क्तः। तादृशाः शचीपतिवारविलासिनीनामुर्वश्यादीनां सङ्केत-केतकी मण्डपा यस्मिन् सः। विरोधाभासेनाह। अकुलीनोऽपि निन्द्यगोत्रोऽपि सद्वंशे-नोत्तमकुलेन भूषितो मण्डित इति विरोधः। न कौ पृथिव्यां लीनोऽकुलीनोऽत्युच्चत्वात्। शोभनैर्वंशैर्वेणुभिरलङ्कृत इति परिहारः। दर्शितमभयं येन स मृत्युजनकं फलं दातुं शीलमस्य तादृश इति विरोधः। दर्शिताभया हरीतकी येन। मृत्युफलं महा-कालफलं कदलीफलं वा दातुं शीलमस्य तादृगिति परिहारः। अभया त्वव्यथा पथ्ये त्य-मरः। मृत्युफलं महाकाले कदल्यां मृत्युफल्यपि। इति विश्वः। सप्रस्थःपरिमाण-विशेषविशिष्टः। अपरिमाणः परिमाणरहित इति विरोधः। कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक्। इत्यमरः। सप्रस्थः ससानुरित्यविरोधः। स्नुः प्रस्थः सानुरस्त्रिया-मित्यमरः। नदेन शब्देन सहितः सनदो निःशब्द इति विरोधः। नद अव्यक्ते शब्दे। नदेन शोणाख्यनदेन सहितो निःशब्द इत्यविरोधः। भीमोऽपि युधिष्ठिरानुजोऽपि कीचकसुहृत् तन्नामराक्षससुहृत्। विराटस्य श्यालकस्थितः कीचकः पाञ्चाल्या साभिलाष इति भीमेन हत इति भारते प्रसिद्धमिति भीमस्य कीचकसुहृत्त्वं विरोधः। भीमो भया-नकः कीचका वंशविशेषास्तेषां सुहृत्। वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः।

प्रचारप्रकटितमहिमा मीमांसान्याय इव पिहितदिगम्बरदर्शनः। यश्च हरिवंशैरिव पुष्करप्रादुर्भावरमणीयै राशिभिरिव मीनमिथुनकुलीरसङ्गतैः करणैरिव शकुनिनागभद्रबालवकुलोपेतैर्देवखातैरुपशोभितोपान्तः। यश्च कुसुमविचित्राभिर्वंशपत्रपतिताभिः सुकुमारललिताभिः पुष्पिताग्राभिः शिखरिणीभिः प्रहर्षिणीभिर्लताभिर्दर्शितानेकवृत्तविलासः। यश्च मदकल-

---

इत्यमरः। पिहिताम्बरश्छादितवस्त्रः। उल्लसत् स्फुरमाणमंशुकं वस्त्रं यस्य स इति विरोधः। चैलं वसनमंशुकमित्यमरः। पिहितमाच्छादितमम्बरमाकाशो येन। उल्लसन्तः स्फुरमाणा अंशवः एवांशुकाः स्वार्थे कः। किरणा यस्य सः। इति परिहारः। अम्बरं व्योम्नि वाससि। किरणोऽस्त्रमयूखांशुरित्युभयत्रामरः। श्लेषेणाह। यो विन्ध्यः प्रवृद्धगुल्मतया प्रवृद्धस्तम्बतयेव दृश्यमानो बहुधातूनामनेकगैरिकादीनां विकारो यत्र तादृक्। अप्रकाण्डे स्तम्बगुल्मौ। धातुर्मनःशिलाद्यद्रेरित्युभयत्रामरः। पक्षे। प्रवृद्धगुल्मतया प्रवृद्धप्लीहतया दृश्यमानो बहुधातूनां रसादीनां विकारो यस्य सः। गुल्मस्तु प्लीहा पुंसीत्यमरः। रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः सप्तैव दश चैकेषां रोमत्वक्स्नायुभिः सह॥ इति हैमः। मता इति शेषोऽत्र। साधुरिव सानुग्रहः सकृपः प्रचारश्चरणं तेन प्रकटीकृत उद्योतितो महिमा स्वोत्कर्षो येन सः। पक्षे। सानुषु शिखरेषु ग्रहाणां सूर्यादीनां प्रचारेण भ्रमणेन प्रकटीकृतो महिमौन्नत्यं येन सः। मीमांसान्याय इव तच्छास्त्रमिव पिहितं तिरोहितं दिगम्बरदर्शनं दिगम्बरमतं येन। पक्षे। पिहितं छादितं दिगम्बरयोर्दिशाकाशयोर्दर्शनं येन सः। यो विन्ध्यो देवखातैरुपशोभितोपान्त इत्यन्वयः। हरिवंशैरिव पुष्करप्रादुर्भाव आख्यानविशेषस्तेन। पक्षे। पुष्कराणां कमलानां जलानां वा प्रादुर्भावेण रमणीयैः। पुष्कराम्भोरुहाणि च। पुष्करं सर्वतोमुखमित्युभयत्रामरः। राशिभिरिव ज्योतिःशास्त्रप्रसिद्धैर्मेषादिराशिभिरिव मीनो मिथुनं कुलीरः कर्कटस्तैः सङ्गतैः। पक्षे। मीनमिथुनं कर्कटास्तैः सङ्गतैः। करणैरिव ज्योतिषागमविशेषैर्बवादिकरणैरिव शकुनिनागभद्रबालवानां तत्तच्छब्दकानां कुलैः समुदायैरुपेतैः। पक्षे। शकुनिः पक्षी नागो गजः सर्पो वा भद्रो मुस्ता बालवकुलो लघुवञ्जुलः। अथवा बालं ह्रीवेरं वकुलो वञ्जुलस्तैरुपेतैः। शकुनिपक्षिशकुनिशकुन्तशकुनद्विजाः। मुस्ता मुस्तकमस्त्रियाम्। स्याद्भद्रमुस्तकः। वकुलो वञ्जुलः। बालं ह्रीवेरबर्हिष्ठोदीच्यमिति चतुर्ष्वमरः। यो विन्ध्यो

कलहंससारससरसितोद्भ्रान्तभाःकूटविकटपुच्छच्छटाव्याधूतविकचकमलखण्डविगलितमकरन्दबिन्दुसन्दोहसुरभितसलिलया सायन्तनमज्जन-पुलिन्दराजसुन्दरी-नाभिमण्डलनिपीतसलिलया मदमुखरराजहंसकुलकोलाहलमुखरितकूलपुलिनया तटनिकट-मत्तमातङ्गगण्डपिण्डविनिर्गतमदधारास्तवकितसलिलया तीर-प्ररूढ-केतकीकाननिपतित-धूलिनिकुरम्बजातसैकतसुखोपविष्ट-तरुणसुरमिथुननिधुवनलीलापरिमलसाचिकूलोपवनया तटाटवी-निकटनिपतितजम्बुखण्डमण्डपावस्थितजलदेवतावगाह्यमानतो-

---

लताभिर्दर्शितानेकवृत्तविलास इति सम्बन्धः। कुसुमैर्विचित्राभिर्वंशपत्रेषु पतिताभिः शिखरिणीभिः शिखरमग्रं तद्वतीभिः साग्राभिरित्यर्थः। प्रहर्षिणीभिः। अन्तर्भावित-ण्यर्थो ऽत्र हृषिः। प्रकर्षेण हर्षकारिणीभिः सुकुमाराश्च। ललिताश्च ताभिः। पुष्पितानि सञ्जातपुष्पाण्यग्राणि यासां ताभिः। पक्षे। तत्तदभिधानैश्छन्दोभिः। म्नौ ज्रौ गस्त्रिदश-यतिः प्रहर्षिणीयम्। रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी। नयसहितौ न्यौ कुसुमविचित्रा। कुमारललिता जसौ ग्। दिग्मुनि वंशपत्रपतितं भरनभनलगैः। पुन-रनुप्रासेनाह। यो बिम्बो रैवयोंपगूढ इत्यन्वयः। मदेन कलमव्यक्तमधुरं कलहंसानां कादम्बानां सारसानां पुष्कराख्यानां रसितं शब्दस्तेनोद्भ्रान्ता भाःकूटा मत्स्यविशेषास्तेषां विकटपुच्छच्छटाभिर्व्याधूतविकचकमलखण्डाद्विगलितमकरन्दबिन्दुसन्दोहेन सुरभितसलि-लया। कादम्बः कलहंसः स्यात्। पुष्कराख्यस्तु सारस इत्यप्यमरः। भाःकूटः कथ्यते मीनभेदे शैलान्तरेऽपि च। इति विश्वप्रकाशः। भागुर इति भाषायाम्। सायन्तने साय-ङ्कालिके मज्जने पुलिन्दराजसुन्दरीणां शबराङ्गनानां नाभिमण्डलैर्निपीतसलिलया। सायं चिरमित्यादिना ट्युल्तुडागमश्च। मदमुखरराजहंसकुलस्य कोलाहलः कलकलस्तेन मुखरितं कूलपुलिनं यस्यास्तया। राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः। कोलाहलः कलकलः। कूलं रोधश्च तीरं च। तोयोत्थितं तत् पुलिनमिति चतुर्ष्वमरः। कोशे तट्यते ऽनेन तटम्। तटनिकटमत्तमातङ्गगण्डपिण्डविनिर्गतमदधाराभिः स्तवकितं सञ्जातस्तवकं सलिलं यस्यास्तया। गण्डः कटो मदो दानमित्यमरः। तीरप्ररूढकेतकीकाननिपतितधूली-निकुरम्बं समूहस्तेन जातं यत् सैकतं तत्र या। सुखोपविष्टसुरमिथुननिधुवनलीला तस्याः परिमलो विमर्दः जनमनोहरो गन्धस्तत्साचि कूलोपवनं तीरस्थितमवनं यस्यास्तया।

यया तीरप्ररूढवेतसलताभ्यन्तरलीनदात्यूहव्यूहमदकलकुहकुहा-रावकौतुकाकृष्टसुरमिथुनसंस्तूयमानाभोगयोपकूलसञ्जातनलनि-कुञ्जपुञ्जितकुलायकुक्कुटघटाघूत्कारभैरवतीरया जलमानुषीमृदि-तसुकुमारतीरयोपवनवातान्दोलिततरलतरङ्गया नलनिकुञ्जपुञ्ज-निविष्टावकोटककुटुम्बिनीनिरीक्ष्यमाणार्द्धशफरया पोताधानलुब्ध-कोयष्टिकस्कभनभीमवेतसवनया तरलतरङ्गमालासञ्चरदुद्दण्डपाल-दर्शनधावदतिचपलराजिलराजिरञ्जितोपकूलसलिलया कर्णाटीर-

---

उपवनस्य परिमलस्याचित्ववर्णनेन सर्वथा जनसञ्चारराहित्यं ध्वन्यते। अत सैकतशब्द-प्रयोगस्तत्सदृश औपचारिकः। विमर्दोत्थे परिमलो गन्धे जनमनोहरे। मैथुनं निधुवनं रतम्। आरामः स्यादुपवनं कृत्रिमं वनमेव यत्। इति विश्वमरः। तटेऽटवीवनं तस्या निकटे निपतितानि जम्बूखण्डानि तेषां मण्डपेष्ववस्थितजलदेवताभिरवगाह्यमानतोयया। अटव्यरण्यं विपिनमित्यमरः। तीरप्ररूढवेतसलताभ्यन्तरलीनदात्यूहव्यूहः कालकण्ठक-समूहस्तस्य मदकलो यः कुहकुहारावः कुहकुहशब्दस्तेन कौतुकं तदाकृष्टसुरमिथुनैः संस्तूयमान आभोगः परिपूर्णता यस्यास्तया। दात्यूहः कालकण्ठकः। आरवारावसंराव-विरावा इति द्वयोरमरः। आभोगः परिपूर्णतेति च। उपवनोपभोग इत्यपि पाठः। उपकूलं सामीप्येऽव्ययीभावः। तत्र सञ्जातो नलनिकुञ्जो लतादिच्छादितो देशस्तत्र पुञ्जितः पुञ्जवदाचरितोऽनेक इत्यर्थः। तादृक् कुलायो नीडं यस्याः सा चासौ कुक्कुटघटा कुक्कुटसमूहस्तस्या घूत्कारेण तादृशशब्देन भैरवं भयानकं तीरं यस्यास्तया। शैलोप-शल्यनिपतद्रथनेमिधारा इत्यादौ उपशल्यशब्दस्यान्त इवात्र घटाशब्दस्य समुदाये प्रयोगो भाक्तः। कुक्कुटश्चरणायुधः। अथ भैरवम्। दारुणं भीषणं भीष्मम्। निकुञ्जकुञ्जौ वा क्लीवे लतादिपिहितोदरे। कुलायो नीडमस्त्रियाम्। गडस्तु घमनः पोटगल इति चतुर्थ्वमरः। जलमानुषीमृदितसुकुमारपुलिनया। वनमानुषवज्जलमानुषः प्राणिविशेषः। जातेरस्त्रीविषयादिति ङीष्। उपवनपवनान्दोलिततरलतरङ्गया। एतेनात्र वाते गुण-त्रयं वर्णितम्। तेन कामिनां सर्वदा सुखकारितास्य ध्वनिता। नलनिकुञ्जपुञ्जे निविष्टो-ऽवकोटको बकस्तत्कुटुम्बिनी स्त्री तया निरीक्ष्यमाणोऽर्द्धशफरो दण्डपालो यस्यां तया। बकोऽवकोटकश्चाथ बलाका तु बकी स्मृता। इति हारावली। दण्डपालोऽर्द्धशफर इति च। पोताधानं क्षुद्राण्डमत्स्यसङ्घातस्तत्र लुब्धकोयष्टिकस्य टिट्टिभकस्य स्कभनं शब्दस्तेन

**मिथुनमैथुनदर्शनोपजातनिधिग्रहणकौतुक-किरातशतखन्यमान-तीरया क्रुद्धयेव दर्शितमुखविभङ्गया मत्तयेव स्खलितगत्या दिनारम्भलक्ष्मीव वर्द्धमानवेलया भारतसमरभूम्येव नृत्यत्कबन्धया प्रावृषेव विजृम्भमाणशतपत्रपिहितविषधरया धनकामयेव खातभूधरसेवया रेवया प्रियतमयेव प्रसारितवीचिहस्तयोपगूढः। यत्र**

---

भौमं वेतसवनं यस्यास्तया। स्कम्भः सौत्रो धातुरनेकार्थत्वात्स्तम्भनार्थः। उद्राक्षमत्स्य-सङ्घातः पोताधानम्। कोयष्टिकष्टिट्टिभक इति द्वयोरमरः। तरलतरङ्गमालायां सञ्चर-दुडुपालो मत्स्यविशेषस्तद्दर्शनेन धावदतिचपला या राजिलराजिर्डुण्डुभसमूहस्तेन रक्षितमुपकूलं यस्यास्तया। समौ राजिलडुण्डुभावित्यमरः। भवेदुडुपालस्तु सर्प-मत्स्यप्रभेदयोः। इति विश्वप्रकाशः। कच्छाटीरः खञ्जनसम्मिथुनमैथुनदर्शनेनोपजातं निधिग्रहणकौतुकं येषां तादृक्किरातशतेन खन्यमानतीरया। कच्छाटीरः। खञ्जरीटस्तु खञ्जन इति हारावली। कौतूहलं कौतुकं च। भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः। इति द्वयोरमरः। तथा च वराहमिहिरः। तस्मिन् निधिर्भवति मैथुनमेति यस्मिन् यस्मिन् पुनर्वमति तत्र तलेऽस्ति काचः। अङ्गारमप्युपदिशन्ति पुरीषणेऽस्य तत्कौतुकाय नयनस्य खनेद्धरित्रीम्॥ इति। वसन्तराजोऽपि। अङ्गारखण्डं किल भूमिभागे तस्मिन् भवेद्यत्र करोति विष्ठाम्। यत्रावनौ खञ्जनको विधत्ते रतं भवेत् तत्र महानिधानम्॥ इति। क्रुद्धयेव दर्शितो मुखस्य वदनस्य विभङ्गः ओष्ठभ्रुकुटीविकारादिर्यया। पक्षे। मुखविभङ्गी निःसरणतरङ्गी यया। मुखं निःसरणास्ययोरिति धरणिः। भङ्गस्तरङ्ग ऊर्मिर्वेत्यमरः। मत्तयेव स्खलिता गतिर्यस्यास्तया। पक्षे। स्खलिता तिर्य्यग्गतिः प्रवाहो यस्यास्तया। दिनारम्भलक्ष्मीरिव वर्द्धमाना वेला कालो यस्यां तया। पक्षे। वेला मर्य्यादा। अब्ध्यम्बु-विकृतौ वेला कालमर्य्यादयोरपि। इत्यमरः। भारतसमरभूम्येव नृत्यत्कबन्धमपमूर्द्धकली-वरं यस्यां सा। पक्षे। जलम्। कबन्धः सलिले रुद्रे कबन्धो राघवान्तरे। इति विश्वः। कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्। इत्यमरः। प्रावृषेव विजृम्भमाणैः शतपत्रैर्मयूरैः पिहिता मयूरभक्षणभयादितस्ततश्छन्ना विषधरा सर्पा यस्यां तया। मयूरः शिखापाशः प्रचलाकी च चन्द्रकी। इति हारावली। पक्षे। विजृम्भमाणशतपत्रैः कमलैः पिहिताच्छन्ना। विषधरा जलधरा जलनागादयो यस्यां तया। विषं क्ष्वेडे जलेऽपि

हरिखरनखरविदारितकुम्भस्थलविकलवारणध्वानैः।
अद्यापि कुम्भसम्भवमाह्वयतीवोच्चतालभुजः॥

ततो मकरन्दस्तमुवाच।

पश्चोदञ्चदवाञ्चदञ्चितवपुः पश्चार्द्धपूर्वार्द्धभाक्
स्तब्धोत्तानितपृष्ठनिष्ठितमनागभुग्नाग्रलाङ्गूलभृत्।
दंष्ट्राकोटिविशङ्कटास्यकुहरः कुर्वन्सटामुत्कटा-
मुत्कर्णः कुरुते क्रमं करिपतौ क्रूराकृतिः केसरी॥

---

चेति विश्वः। अतएव कुसुमयमित्यमरः। धने द्रव्ये कामोऽभिलाषो यस्यास्तथैव। कृता भूभृतो राज्ञः सेवा यया। पक्षे। विश्वस्य प्रसारितवीचिहस्तया प्रियतमयेवोपगूढ़ः। हरीति। यो। विश्वाः। उच्चताल एव भुजो यस्य सः। हरिखरनखरविदारितकुम्भस्थलविकलवारणध्वानैरद्यापि कुम्भसम्भवमगस्त्यमाह्वयतीवागच्छागच्छेत्याह्वानं करोतीवेत्यर्थः। कुञ्जरो वारणः करीत्यमरः। अगस्त्यः कुम्भसम्भव इति च। उत्प्रेक्षालङ्कारः। आर्या वृत्तम्। ततो गिरिदर्शनोत्तरं मकरन्दस्तं कन्दर्पकेतुमुवाच। स्वभावोक्त्याह। पश्चेति। उदञ्चदुत्तिष्ठदवाञ्चदधोगच्छदञ्चितं वपुःपूर्वार्धपश्चार्धं भजति तादृक्। अपरस्यार्धे पश्चभावो वक्तव्य इति पश्चादेशः। स्तब्धोत्तानितपृष्ठं निष्ठितं स्थितं तादृक्। मनागीषद्भुग्नमग्रमस्य तादृक्। लाङ्गूलं पुच्छस्तं बिभर्ति तादृक्। दंष्ट्राकोटिभिर्विशङ्कटं दृढदास्यकुहरं मुखगर्भो यस्य तादृक्। उद्गतौ कर्णौ यस्य सः। सटामुत्कटां कुर्वन् क्रूराकृतिः। केसरी सिंहः। करिपतौ गजवरे क्रमं पादविक्षेपं कुरुते पश्य। पश्य मृगो धावतीत्यादाविवास्य क्रियायाः कर्मत्वम्। पुच्छोऽस्त्रीलूमलाङ्गूलम्। विशङ्कटं पृथु बृहदित्यमरो द्वयोः। सटा जटाकेसरयोरिति हैमः। स्वभावोक्तिरलङ्कारः। स्वभावोक्तिस्तु बस्यैव जात्यादिस्थस्य वर्णनम्। इति लक्षणात्। शार्दूलविक्रीड़ितं वृत्तम्। सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीड़ितमिति लक्षणात्। उतक्रममाणं वर्णयित्वा क्रान्तगजं वर्णयति। उत्कर्ण इति। उत्कर्णः। चकाशु-चक्षिमपटुः। स्फारं बहु स्फुरन्तः केसरा यस्य। क्रूराकारं करालं वक्रं मुखं तेन विकटो भयानकः। स्तब्धं निश्चलमूर्ध्वमुत्क्षिप्तं लाङ्गूलं बिभर्ति तादृक्। चीत्कुर्वन्। गिरिकुञ्जकुहरशिरः कुम्भस्थलस्थोऽयं पुरोवर्त्ती हरिः सिंहः सर्वाङ्गसङ्कोचनाच्चित्रेणाप्यभिलिखितुं न शक्यते। अत्र शिरःपदमधिकम्। तुरङ्गसिंहयोः स्कन्धकेशेषु

अपिच । उत्कर्णोऽयमकाण्डचण्डिमपटुः स्फारस्फुरत्केसरः
क्रूराकारकरालवक्त्रविकटः स्तब्धोर्ध्वलाङ्गूलभृत् ।
चित्रेणापि न शक्यतेऽभिलिखितुं सर्वाङ्गसङ्कोचनाच्
चित्कुर्वद्गिरिकुञ्जकुञ्जरशिरःकुम्भस्थलस्थो हरिः ॥

अनन्तरं नीचदेशनद्येव न्यग्रोधोपचितयोत्तरगोग्रहसमरभूम्येव विजृम्भमाणबृहन्नलया मरुदेशढक्कायात्रयेव घनसारसार्थवाहिन्या विदग्धजनमधुपानगोष्ठेव नानाविटपीतासवया नलकूबरचित्तवृत्त्येव सततधृतरम्भया मत्तमातङ्गगत्येव घण्टारवा वेदितमार्गया

---

बकुलद्रुमे । पुन्नागवृक्षे किञ्जल्के केसरः स्यात् । इति हैमः । अनन्तरं सिंहावलोकनानन्तरं विश्वाटव्या विश्वारण्येन कतिचित् । पदानि गत्वा कामिन इव मदनशलाकाङ्कितस्य जम्बूवृक्षस्य शीतलच्छायायां विश्रामीत्यन्वयः । मदनशलाका सारिर्या पाठशालिनीति हारावली । पक्षे । मदनशलाका कामोद्बोधको वर्त्तिविशेषः । मदनशलाकां कामी शिरोषधमध्यगं वहति । इति गर्गः स्यान्मदनशलाकापि भार्यां कामोद्दीपौषधाविति विश्वप्रकाशः । नखक्षतमिति केचित् । नीचदेशनद्येव निम्नभागनद्येव न्यग्रोधोऽधःप्रदेशावरोधनं तेनोपचितया वृद्धया । पक्षे । न्यग्रोधैर्वटैरुपचिता तया न्यग्रोधो बहुपादवट इत्यमरः । उत्तरगोग्रहसमरभूम्येव विजृम्भमाणो बृहन्नडोऽर्जुनः । उत्तरस्या विराटस्य तनये दिशि चोत्तरे । इति विश्वप्रकाशः । पक्षे । बृहन्नडो धमनयः यस्यां तया । ढक्काया ढक्काध्वनेर्यात्रा गमनं ढक्कायात्रा मरुदेशस्य ढक्कायात्रा तयेव घनो मेघस्तत्सारः पानीयं तदर्थं सार्थः समूहस्तद्वाहिनी तत्प्रापिका । यद्वा ढक्काध्वनेन तद्ध्वनिः सा चासौ यात्रोत्सवः । तदुक्तमुदकं कूपादिष्वेवं हृष्यलक्ष्या । अन्यत् पूर्ववत् । गमनोत्सवयोर्यात्रेति विश्वः । मरुदेशे जलार्थिनो ढक्काध्वनिश्रवणाज्जलमुद्गसमन्धोरिति निकषा प्रयान्तीति प्रसिद्धम् । पक्षे । घनसारः कर्पूरम् । पुष्पफलहीनः करवीरसन्नानाकारपत्रः क्षुपभेदो वा घनसारस्तु कर्पूरे हृद्भेदे जलेऽपि च । इति विश्वः । ढक्कयात्रेति लपपाठः । असञ्ज्ञात्वानक्कापो: सञ्ज्ञाछन्दसोरित्यस्याप्रवृत्तेः । विदग्धजनमधुपानगोष्ठ्येव नानाविटैरनेकखिड्गैः पीत आसवो मद्यं यस्याम् । खिड्गः पाल्लविको विटः । मैरेयमासवः शीधुरित्यमरः । पक्षे । नानाविटपिष्वितं जातमासवं आस्वादिकं यस्यां तया । नलकूबरः कुबेरपुत्रस्तच्चित्तवृत्त्येव सततं धृता रम्भा तन्नामिकाप्सरसो यया । अथेत्यनुवृत्तौ पुत्रस्तु नलकूबर इति कुबेर प्रकरणेऽमरः

सदीश्वरसेवयेवादूरोन्नतबहुफलया विराटलक्ष्मीरिवानन्दितकीचकशतया विन्ध्याटव्या कतिचित् पदानि गत्वा कामिन इव मदनशलाकाङ्क्षितस्य जम्बूवृक्षस्य शीतलच्छायायां विशश्राम। अत्रान्तरे भगवानपि मरीचिमाल्यातपक्लान्तमत्तमहिषलोचनपाटलमण्डलश्चरमाचलशृङ्गमारुरोह। ततो मकरन्दः फलमूलान्यादाय कथं कथमपि तमभिनन्दिताहारपरिचयमकार्षीत् स्वयं च तदुपभुक्तशेषमशनमकरोत्। अथ तामेव प्रियतमां हृदयफलके सङ्कल्पतूलिकया लिखितामिवावलोकयन् निस्पन्दकरणग्रामः कन्दर्पकेतुर्मकरन्दविरचितपल्लवशयने सुष्वाप। अथार्धयाममात्रावखण्डितायां यामवत्यां तत्र जम्बूतरुशिखरे शुकसारिकयोर्मिथः कलहायमानयोः कलकलं श्रुत्वा कन्दर्प-

---

पक्षे। सततं धृता रम्भा कदली यया। कदली वारणबुसा रम्भा मोचांशुमत्फला। इत्यमरः। मत्तमातङ्गगत्येव घण्टाया रवः शब्दस्तेनावेदितमार्गया। पक्षे। घण्टारवा तृणभेदः। घण्टारवा तु शणपुष्पिकेत्यमरः। सदीश्वरसेवयेवादूरोन्नतानि बहूनि बहुविधानि भूयांसि वा फलानि यस्यां तया। पक्षे। अदूरं शीघ्रमुन्नतानि बहूनि धनाद्यनिष्टनिवारणादीनि फलानि यस्यां तया। विराटलक्ष्मीरिवानन्दितं कीचकानां तद्भ्रातॄणां शतं यया। पक्षे। कीचका वंशविशेषाः। वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः। इत्यमरः। अत्रान्तरेऽस्मिन्नवसर आतपक्लान्तमत्तमहिषलोचनवत्। पाटलो मण्डलो यस्य तादृङ् मरीचिमाली सूर्यश्चरमाचलशृङ्गमस्तगिरिशिखरमारुरोह। श्वेतरक्तस्तु पाटलः। अन्तस्तु चरमः स्यादिति द्वयोरमरः। ततोऽस्तमनोत्तरं मकरन्दः फलमूलान्यादाय तं कन्दर्पकेतुमभिनन्दिताहारपरिचयमकार्षीत्। स्वयं च तद्भुक्तशेषाशनमकरोत्। अथ फलाद्यशनोत्तरं हृदयफलके हृदयपट्टे सङ्कल्पतूलिकया कूर्चिकया लिखितां तामेव स्वप्नदृष्टामेव प्रियतमामवलोकयन् ध्याने पश्यन् निस्पन्दकरणग्रामो निश्चलसकलेन्द्रियः कन्दर्पकेतुर्मकरन्दविरचितपल्लवशयने सुष्वाप। अथ तूलिका कूर्चिकेति हैमः। नक्तव्रतकन्दमूलाशनपल्लवशयनशयनेन गिरौ तपश्चरणं ध्वनितम्। गिरिः सद्यः फलदातृत्वं दर्शयति। अयेत्यादिना। अथ शयनोत्तरमर्धयाममात्रावखण्डितायां विभावर्यां तत्र जम्बूतरुशिखरे तस्मिन् जम्बूवृक्षे मिथः कलहायमानयोः शुकसारिकयोः कलकलं श्रुत्वा कन्दर्पकेतु-

केतुर्मकरन्दमुवाच। वयस्य! शृणुवस्तावदेतयोरालापमिति। ततः सारिका प्रकोपतरलाक्षरमुवाच। कितव! सारिकान्तरमन्विष्य समागतोऽसि कथमन्यथा रात्रिरियती तवेति। तच्छ्रुत्वा शुकस्तामवादीत्। भद्रे! ऽपूर्वाद्य कथा मया श्रुता प्रत्यक्षीकृता च तेनायं कालातिपातः। अथ समुपजातकुतूहलया सारिकयानुरुध्यमानः कथयितुमारेभे। अस्ति सुधाधवलैर्बृहत्कथारम्भैरिव शालभञ्जिकोपेतैर्वृत्तैरिव समाणवकक्रीडितैः करियूथैरिव समत्तवारणैः सुग्रीवसैन्यैरिव सगवाक्षैर्बलिभवनैरिव

---

मकरन्दमुवाच। मिथोऽन्योन्यं रहस्यपि। द्वौ यामप्रहरौ समावित्युभयत्रामरः। किमित्याह। वयस्येति। वयस्यैतयोरालापं तावच्छृणुव इति। ततः कलहानन्तरं सारिका। प्रकोपतरलाक्षरं क्रियाविशेषणम्। उवाच। कितव! धूर्त्त! सारिकान्तरमन्विष्य। अन्वेषणेन तया सह सम्बन्धो लक्ष्यते। समागतोऽसि अन्यथा सारिकान्तरसम्बन्धाभावे। तवेत्यस्य तदागमने लक्षणा। इयती रात्रिरिति। तच्छ्रुत्वा शुकस्तां सारिकामवादीत्। भद्रे ऽद्यापूर्वा कथा श्रुता प्रत्यक्षीकृता च। कथायाः शब्दरसन्दर्भस्य प्रत्यक्षासम्भवात् तदर्थभूतक्रियाया अपि प्रत्यक्षासम्भवात् तदाश्रया जना लक्ष्यन्ते। तेनायं कालातिपातः। मदागमनेऽतिकाल इत्यर्थः। अथ शुकवाक्श्रवणोत्तरं समुपजातकुतूहलया सारिकयानुरुध्यमानः शपथादिना भूयो भूयोऽर्थ्यमानः। शुक इति शेषः। कथयितुमारेभे। कुसुमपुरं नाम नगरमस्तीत्यन्वयः। कीदृग्वेश्मभिरुपशोभितम्। सुधाधवलैः। सुधा लेपोऽमृतं स्नुहीत्यमरः। चुनी इति प्रसिद्धं लेपनद्रव्यम्। बृहत्कथा गुणाढ्यकृतिस्तदारम्भैरिव शालभञ्जिकोपेतैः। शालभञ्जिका नायिकाविशेषः। पक्षे। शालभञ्जिका पुत्तलिका। शालभञ्जी पाञ्चालिका च पुत्तलिकेति हैमः। वृत्तैरिव छन्दोभिरिव समाणवकक्रीडितैः। माणवकक्रीडितं नाम छन्दो विशेषः। माणवकं भाक्तलगाः। पक्षे। माणवकानां शिशूनां क्रीडितानि तैः सहितानि तैः। करियूथैरिव समत्तवारणैः समत्तगजैः। पक्षे। सनिर्यूहैः। मत्तवारणमिच्छन्ति दानक्लिन्नकरे द्विपे। महाप्रासादवीथीनां वरण्डे चाप्यपाश्रये॥ इति विश्वप्रकाशः। निर्यूहो मत्तवारणमिति वैजयन्ती। मत्तालम्बोऽपाश्रयः स्यात् प्रग्रीवो मत्तवारणः। इति हैमः। निर्यूहः शेखरे द्वारे निर्यासे नागदन्तके। इति विश्वप्रकाशः। सुग्रीवसैन्यैरिव सगवाक्षैः। गवाक्षो वानरविशेषस्तत्सहितैः। पक्षे। सगवाक्षैः सवातायनैः।

सुतलसन्निवेशैर्वेश्मभिरुपशोभितं धनदेनापि प्रचेतसा जापालेनापि रामेण प्रियंवदेनापि पुष्पकेतुना भरतेनापि शत्रुघ्नेन तिथिपरेणा-प्यतिथिसत्कारपरेणासंख्येनापि संख्यावता मर्मभेदिनापि वीर-तरेणापतितेनापि नानासवासक्तेन सुदर्शनेनाप्यचक्रेणाजातमदे-नापि सुप्रतीकेनापक्षपातिनापि हंसेनाविदितस्नेहचयेणापि

---

बलिभवनैरिव सुतले पातालविशेषे सन्निवेशो येषां तैः। पक्षे। शोभनतलसन्निवेशो येषां तैः। पौरजनेनानुपेतमित्यन्वयः। धनदेनापि कुवेरेणापि प्रचेतसा वरुणेनेति विरोधः। धनदो धनदाता प्रकृष्टं चेतो यस्य स इत्यविरोधः अजापालो जाबालो रामः पशुविशेष इति विरोधः। केचित् त्वजापालो रामपूर्वजो रामो दाशरथिरिति विरोधः। जाबालः स्यादजाजीवः। रामः सृमरो गवयः शश इत्यादयो मृगेन्द्राद्या इत्युभयत्रामरः। अकारो वासुदेवस्तस्याप्यातोऽजः कामस्तमापालयति तादृक्। अतएव रमयतीति रामः। णिजन्ता-दच्। ततोऽण्। स्त्रीणां क्रीड़ाकारकस्तादृशेनेत्यविरोधः। प्रियम्वदो गन्धर्वविशेषः पुष्प-केतुः काम इति विरोधः। प्रियं वदति तादृक् तेन। प्रियवशे वदः खजिति खच्। अरुर्द्विषदिति मुम्। पुष्पकेतुः पुष्पाभरणस्तेनेत्यविरोधः। भरतः कैकेयीतनयः शत्रुघ्नः सौमित्रिरिति विरोधः। भे नक्षत्रे रतस्तेन ज्यौतिषिकेन शत्रुघातकेनेति परिहारः। तिथौ विहिततत्तत्तिथिकर्म्मणि परेण रतेन। न तिथिसत्कारपरोऽतिथिसत्कारपर इति विरोधः। अतिथीनामागन्तूनां सत्कारपरेणेति परिहारः। आगन्तुरतिथिर्ना गृहागते। इत्यमरः। असङ्ख्येन बहुत्वाद्गणनारहितेन सङ्ख्यावता सङ्ख्यासहितेनेति विरोधः। असङ्ख्येनायुद्धेन सङ्ख्यावता पण्डितेनेत्यविरोधः। मृधमास्कन्दनं सङ्ख्यम्। सङ्ख्या-वान् पण्डितः कविरित्युभयत्रामरः। अमर्मभेदिनाऽपि वीरतरेण काण्डेन। काण्डस्य मर्मभेदित्वं प्रसिद्धम्। तद्भिन्नत्वेन वर्णनं विरोधः। अजिह्मगो वीरतरोऽस्त्रकण्टक इति हारावली। मर्मरहस्यं तद्भेदकेन वीरतरेणातिशूरेणेति परिहारः। अपतितेन भूमाव-पतितेन नानासवासक्तेनानेकमद्यासक्तेनेति विरोधः। मैरेयमासवः शीधुरित्यमरः। अपतितेनाप्रायश्चित्ताईेण। नाना सवा अनेकयज्ञास्तेष्वासक्तेनेति परिहारः। यज्ञः सवो-ऽध्वरो याग इत्यमरः। अजातमदेनासम्भृतदानेन सुप्रतीकेन तन्नामक गजेनेति विरोधः। अजातमदेनासञ्जाताहङ्कारेण सुष्ठु प्रतीकमङ्गं यस्य तेनेति परिहारः। अङ्गं प्रतीको-ऽवयव इत्यमरः। सुदर्शनेनाचक्रेण। विष्णुचक्रस्य सुदर्शन इति सञ्ज्ञेति विरोधः। अचक्रेणादम्भेन। जनावने समूहे च दम्भे भेदरथाङ्गयोः। इति रन्तिदेवः। शोभनं दर्शनं

कुलप्रदीपेनाप्यस्नेहेनापि वंशपोतेन निदाघदिवसेनेव तृषविवर्धितरुचिना माघविरामदिवसेनेव तपस्यारम्भिणाग्रहेणापि काव्यजीवज्ञेन पौरजनेनानुगतं घनागमदिवसेनेव दर्शितखण्डाभ्रेण वेलातटेनेव प्रवालमणिमण्डितेन देवाङ्गनाजनेनेवेन्द्राणीपरिचयविदग्धेन वनगजेनेव पल्लवपल्लवितरुचिना कोकिलेनेव परपुष्टेन भ्रमरेणेव कुसुमेषु लालितेन जलौकसेव रक्ताकृष्टि-

---

यस्येत्यविरोधः। न पक्षेण गरुता पततीत्यपक्षपाती तेन हंसेन पक्षिणेति विरोधः। पक्षकारि विपक्षी पक्षपाती तादृशेन हंसेन विशुद्धेन निर्लोभेन वेति परिहारः। पक्षकारो वासुदेवः स्यादित्ये काचरः। हंसो विशुद्धे निर्लोभे श्रेष्ठे च विहगान्तरे। इति विश्वः। न विदितः स्नेहस्य तैलस्य क्षयो येन तेनापि कुलप्रदीपेनेति विरोधः न विदितः स्नेहक्षयोऽनुरागक्षयो येन। कुलस्य वंशस्य प्रदीपेन प्रकाशकेनेति परिहारः। अग्रन्थिना पर्वरहितेन वंशपोतेन वंशाङ्कुरेणेति विरोधः। अग्रन्थिना शुद्धहृदयेन वंशपोतेन सत्कुलार्भकेणेत्यविरोधः। निदाघदिवसेनेव तृषेण तृष्णाक्रमणेन विवर्द्धितरुचिना प्रवृद्धतापेनेत्यर्थः। पक्षे। तृषि धर्मे विवर्द्धितरुचिना। माघविरामदिवसेनेव तपस्यस्य फाल्गुनस्यारम्भिणा। स्यात् तपस्यः फाल्गुनिक इत्यमरः। पक्षे। तपस्या तपश्चरणं तदारम्भिणा अग्रहेणापि काव्यजीवज्ञेन शुक्रगुरुबुधेन। पक्षे। काव्यस्य जीवज्ञ नामधरेण। वेलाजनेनाधिष्ठितमित्यन्वयः। घनागमदिवसेनेव दर्शितखण्डाभ्रेण दर्शितखण्डमेघेन। पक्षे। खण्डाभ्रं दन्तक्षतविशेषः। तथा च वामनः। विचित्रमौषत्परिमण्डलं च क्षतैः समन्तादिशटैरुपेतम्। खण्डाभ्रमेतद्दशनापलेखं बिम्बाधरोत्सङ्गविभूषणाय॥ इति। वेलातटेनेव प्रवाला विद्रुमा मणयश्च तैर्मण्डितेन। पक्षे। प्रवालैरुत्तमकेशैर्विद्रुमैर्वा मणिभिर्मण्डितेन। यद्वा। प्रवालमणिर्दन्तक्षतविशेषः। तथा च वामनः। गाढं दन्तौष्ठसंयोगात् स प्रवालमणिर्भवेत्। इति। देवाङ्गनाजनेनेवेन्द्राणी शची तस्याः परिचयाद्विदग्धेन। पक्षे। इन्द्राणी रतौ बन्धविशेषः। निजकाश्चयस्तत्तजानुभ्यां भवति वाम्यामान्। इन्द्राणीरचितत्वादिन्द्राणीत्याख्यया बन्धः। इति। वनगजेनेव पल्लवे किसलये पल्लविता विस्तृता रुचिरिच्छा येन तेनेव। पक्षे। पल्लवैः पल्लवेषु वा विटैर्विटेषु वा विवर्द्धितरुचिना। पल्लवः किसलये स्विङ्गी विस्तारे विटपेऽपि च। इति विश्वः। कोकिलेनेव परस्मात् पुष्टेन। पक्षे। परमत्यर्थं पुष्टेन। भ्रमरेणेव कुसुमेषु पुष्पेषु लालितेन। पक्षे। कुसुमेषुणा कामेन लालितेन। जलौकसेव रक्ताकृष्टौ रुधिराकर्षणे निपुणेन। रक्त-

निपुणेन याजकेनेव सुरतार्थिना महानटबाहुनेव वल्लाङ्गजङ्गेन गरुडेनेव विलासिहृदयतापकरेणान्धासुरेणेव शूलानामुपरिगतेन वेश्याजनेनाधिष्ठितं कुसुमपुरं नाम नगरम्। यत्र च सुरासुरमौलिमालालालितचरणारविन्दा शुम्भनिशुम्भमहावनदावज्वाला महिषमहासुरगिरिवज्रसारधारा प्रणयप्रणतगङ्गाधरजटाजूटस्खलितजाह्नवीजलधाराधौतपादपद्मा भगवती कात्यायनी वेतालाभिधाना स्वयं प्रतिवसति। यस्य च परिसरे सुरासुरमुकुटकुसुमरजोराजिपरिमलवाहिनी पितामहकमण्डलुधर्मद्रव-

---

क्षतजशोणितमित्यमरः। जलौकसेनेति पाठे पूर्वनोकःशब्दात् स्वार्थेऽण्प्रत्यात् समासः पक्षे। रक्तानामनुरक्तानामाकृष्टिस्तत्र निपुणेन। शाब्दिकैस्तु जलौकाभिः कथितोऽयं जलौकसः। इतिशब्दभेदप्रकाशः याजकेनेव सुरता सुरत्वं तदर्थिना। भावे तल्। तलन्तं स्त्रियामिति स्त्रीत्वम्। पक्षे। सुरतं निधुवनं तदर्थिना। महानटबाहुनेव शिवभुजेनेव वल्लाङ्गजङ्गेन। पक्षे। वल्लादिलासिना। भुजङ्गोऽहिविलासिनोरिति विश्वः। गरुडेनेव विलं आसितुमुपवेष्टुं शीलं येषां तेषां सर्पाणां हृदयतापकरेण। पक्षे। विलासिनां स्वासङ्गतविलसनशीलानां हृदयतापकरेण। अन्धासुरेणेव शूलानामुपरिगतेन। दारा इत्यादाविवावयवाभिप्रायेण बहुवचनम्। अन्धासुरो भैरवेण शूलाग्रे रोपित इति कथा। पक्षे। शूलानामुपरिगतेन। अन्यत्र स्थिताभ्यो वेश्याभ्योऽधिकेनेति भावः। मत्यौ प्रहरणे शूलः केतने योगरोगयोः। खलादिश वधायांश कीलके पर्यये॑पिति॥ इति विश्वप्रकाशः। यत्र कुसुमपुरे वेतालाभिधाना स्वयं प्रतिवसतीति सम्बन्धः। सुरासुरेति स्पष्टम्। शुम्भनिशुम्भावेव महावनं तस्य दावज्वालारूपाग्निशिखा। दवदावौ वनारण्यवह्नी इत्यमरः। महिषेति रूपकम्। विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत्। इति लक्षणात्। प्रणयेन प्रीत्या प्रणतो गङ्गाधरस्तस्य जटाजूटात् स्खलिता या जाह्नवीजलधारा तया धौतपादपद्मा। एतेन न केवलं मर्त्यैव प्रणमाम किन्तु सपत्न्यापि पादक्षालनमाचरितमिति ध्वनितम्। तेनातिवल्लभात्वं ध्वनितम्। यस्य पुरस्य परिसरे प्रान्ते भागीरथी गङ्गा वहतीति सम्बन्धः। सुरासुरेति। पितामहस्य ब्रह्मणः कमण्डलोर्धर्मद्रवरूपा धारा। धरातलगतसगरसुतशतस्य सुरनगरसमारोहणार्थं पुण्यरज्जुः। ऐरावतस्य कटकषणेन गण्डस्थलघर्षणेन कम्पिततटहरिचन्दनस्य स्यन्देन प्रस्रवणेन सुरभित-

धारा धरातलगतसगरसुतशतसुरनगरसमारोहणपुण्यरज्जुरैरावतकटकषणकम्पिततटहरिचन्दनस्यन्दनसुरभितसलिला सलीलसुरसुन्दरीनितम्बबिम्बाहतितरलिततरङ्गा स्नानावतीर्णसप्तर्षिजटाटवीपरिमलपुण्यवेणिरेणतिलकमुकुटजटाजूटविकटकुहरभ्रान्तिजनितसंस्कारतयेव कुटिलावर्त्ता धरणीव सार्वभौमकरस्पर्शोपभोगक्षमा जलदकालसरसीव गन्धान्धोपरिभ्रमद्भ्रमरमालानुमीयमानजलमग्नकुमुदपुण्डरीका छन्दोविचितिरिव मालिनीसनाथा हतान्धतमसापि तमसान्विता वीचिकलिताप्यवीचिदुर्गमा भगवती भागीरथी वहति। यत्र दिशि दिशि तारागणमिव कुसुमनिकरमुद्वहद्भिरुत्तम्भितजलदैरनूरुकरकशाभिघातपरवश-रविरथतुरगग्रास-विषमितपल्लवैश्चन्द्रचमूरुचरणसङ्क्रान्तामृतकणनिकरसेकसञ्जातबहलसुकुमारनवकिसलयसहस्रदर्शि-

---

सलिला। सलील क्रियाविशेषणम्। सुरसुन्दरीनितम्बबिम्बाहतिभिस्तरलस्तरङ्गा। स्नानावतीर्णसप्तर्षिजटाटव्याः परिमलपुण्यवेणिः पुण्यप्रवाहः। एणतिलकश्चन्द्रो मुकुटे यस्य तस्य जटाजूटविकटकुहरे भ्रान्तिर्भ्रमणं तेन जनितसंस्कारतयेव कुटिल आवर्त्तो जलभ्रमस्तद्वती। स्यादावर्त्तोऽम्भसां भ्रम इत्यमरः। धरणीव सार्वभौमश्चक्रवर्त्ती। पक्षे। सार्वभौम उत्तरदिग्गजस्तस्य करस्पर्शोपभोगक्षमा। उभयोरेकदिक्स्थत्वादिति भावः। स्पर्शः स्पर्शनदानयोरिति विश्वः। जलदकालसरसीव गन्धान्धोपरिभ्रमन्ती चासौ भ्रमरमाला तयानुमीयमानानि जलमग्नकुमुदपुण्डरीकाणि यस्यां सा। पक्षे। कुमुदपुण्डरीकौ दिग्गजौ। छन्दोविचितिर्ग्रन्थविशेषस्तद्वन्मालिनी छन्दोविशेषस्तेन सनाथा। ननमयययुतेयं मालिनी भोगिलोकैः। पक्षे। मालिनीनामिका नदी। हतान्धतमसापि नाशितान्धकारापि तमसान्धकारेणान्वितेति विरोधः। तमसानामिकया नद्यान्वितेति परिहारः। वीचिभिस्तरङ्गैः कलिता व्याप्तापि न वीचिभिर्दुर्गमेति विरोधः। पक्षे। अवीचिर्नरकभेदः। तत्र तापनावीचिमहारौरवरौरवाः। इत्यमरः। सम्बन्धातिशयोक्त्याह। उपवनपादपैरुपशोभितमित्यन्वयः। दिशि दिशीति स्पष्टम्। अतएवोत्तम्भितजलदैः। अनूरुरिति। अरुणोऽनूरुः काश्यपिरित्यमरः। ग्रासो भक्षणम्। शेषं स्पष्टम्। भरत-

ताकालसन्ध्याविभ्रमैर्भरतचरितैरिव सदा रामाश्रितैर्महावीरैरिव नारिकेलीधरैरसंस्कृततरुणैरिवातिदूरप्रसारिताक्षैर्मत्तमातङ्गकुम्भस्थलदारणोद्यतसिंहैरिवोद्यतकेसरैः सारिष्टैरपि चिरजीविभिरुपवन-पादपैरुप-शोभित-मदितिजठर-मिवानेक-देव-कुलाध्यासितं पातालमिव महाबलिशोभितं भुजङ्गाधिष्ठितं च सुरालयैरपि पवित्रं भोगिभिरपि निरुपद्रवम्। यत्र च सुरतभरखिन्नसुप्तसीमन्तिनीरत्नताटङ्कमुद्राङ्कितबाहुदण्डः प्रचण्डप्रतिपक्षलक्ष्मीकेशपाशकुसुममालामोदसुरभितकरकमलः प्रशस्तकेदार इव बहुधान्यकार्यसम्पादकः शृङ्गारशेखरो नाम राजा प्रतिवसति। यो बलभित् पावको धर्मराण् निर्ऋतिः प्रचेताः सदागतिर्धनदः

---

चरितैरिव सदा रामाश्रितैः। पक्षे। सन् श्रेष्ठो य आरामस्तदाश्रितैः। असंस्कृततरुणैरिवातिदूरं प्रसारिते अक्षिणी यैस्तैः। कटाक्षदर्शनानभिज्ञत्वादिति भावः। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षजिति षच्। यद्वातिदूरं प्रसारिता अक्षाः पाशका यैस्तैः। अथाक्षमिन्द्रिये। नाद्यूताङ्ग इत्यमरः। पक्षे। अक्षा बिभीतकाः। बिभीतकः। नाक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः। इत्यमरः। मत्तमातङ्गकुम्भस्थलदारणोद्यतसिंहैरिवोद्यतकेसरैरुद्धृतस्कन्धकेशैः। जातिवर्णनमेतत्। पक्षे। केसरावृक्षाः। चाम्पेयः केसरो नागकेसर इत्यमरः। सारिष्टैरपि मरणसूचकयोगविशेषसहितैरपि चिरजीविभिः। पक्षे। सारिष्टैः फेनिलवृक्षसहितैः। अरिष्टः फेनिलः समावित्यमरः। अदितिजठरमिव देवमातुरुदरवदनेकं देवकुलं देवसमूहस्तेनाध्यासितम्। पक्षे। देवकुलं देवगृहम्। सुरालयैर्मद्यगृहैरपि पवित्रमिति विरोधः। सुरालयैर्देवगृहैरित्यविरोधः। भोगिभिः सर्पैरपि निरुपद्रवमिति विरोधः। भोगिभिः सुखिभिरिति परिहारः। यत्र कुसुमपुरनामनगरे शृङ्गारशेखरो नाम राजा प्रतिवसतीति सम्बन्धः। सुरतेति स्पष्टम्। प्रचण्ड इति स्पष्टम्। अनेन कचग्रहणपूर्वकमरिलक्ष्मीः स्वायत्तीकृतेति ध्वनितम्। प्रशस्तकेदार इव विपुलक्षेत्रमिव बहुधान्यकार्यसम्पादकः। पुन्नपुंसकयोर्वप्रः केदारः क्षेत्रमित्यमरः। पक्षे। बहुधा बहुप्रकारैरन्यकार्यसम्पादकः। यः शृङ्गारशेखरो बलभित्त्वबलभेत्ता। पावकः पवित्रकर्ता। धर्मेण राजते धर्मराट्। निर्गतार्त्तिः स्पर्धा यस्य ऋतिर्गतौ घृणायां च स्पर्धायां च शुभेऽपि च। इति रभसः। प्रकृष्टं चेतो यस्य

शङ्कर इत्यष्टमूर्तिरप्यनष्टमूर्त्तिः पार्थ इव सुभद्रोपेतः सभीमसेनश्च कृष्ण इव सत्यभामोपेतः सबलश्च ।

सुराणां पातासौ स पुनरतिपुण्यैकहृदयो
गृहस्तस्यास्थाने गुरुरुचितमार्गे स निरतः ॥
करस्तस्यात्यर्थं वहति शतकोटिप्रणयितां
स सर्वस्वं दाता तृणमिव सुरेशं विजयते ॥
जीवाकृष्टिं स चक्रे मृधभुवि धनुषः शत्रुरासीद्गतासु-
र्लक्षाप्तिर्मार्गणानामभवदरिबले तद्यशस्तेन लब्धम् ।

---

प्रचेताः । सताम् साकल्येन गतिर्निर्वाहो यस्मात् धनदो धनदाता । शङ्करः कल्याणकारी । पक्षे । बलभिदिन्द्रः । पावको वह्निः । धर्मराड् यमः । निर्ऋतो राक्षसः । प्रचेता वरुणः । सदागतिर्वायुः । धनदः कुबेरः । शङ्करः शिवः । इत्यष्टमूर्तिरष्टगुणविशिष्टा मूर्तिरस्यत्यष्टमूर्तिरप्यनष्टमूर्तिः । नाष्टौ मूर्तयोऽस्येत्यनष्टमूर्तिरिति विरोधः । अनष्टा मूर्तिरस्येत्यनष्टमूर्तिरिति परिहारः । पार्थ इवार्जुन इव सुभद्रयोपेतः । भीमसेनेन सहितः सभीमसेनः । पक्षे । शोभनभद्रेण कल्याणेन युतः । भीमया सेनया सहितः । कृष्ण इव सत्यभामयोपेतः । सबलः सबलभद्रः । पक्षे । सत्यं च भा च दीप्तिश्च मा च लक्ष्मीश्च ताभिर्युतः । सबलः ससैन्यः । सुराणामिति । असाविन्द्रः सुराणां देवानां पाता रक्षकः । मद्यप इत्यपि श्लेषमहिम्नार्थः । शृङ्गारशेखरः पुनरतिपुण्यं पवित्रमेकं हृदयं यस्येत्युत्कर्ष इन्द्रात् । तस्येन्द्रस्यास्थाने सभायां गुरुर्बृहस्पतिर्ग्रहो ग्रहेषु पठितः । तस्येन्द्रस्यास्थाने गुरुर्महान् ग्रहो निर्बन्ध इत्यर्थश्च । निर्बन्धोपरागार्कादयो ग्रहाः इत्यमरः । स राजोचितमार्गे निरतः सक्तः । तस्येन्द्रस्य करो हस्तः शतकोटिप्रणयितां वज्रप्रणयितां वहति । शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः । इत्यमरः । शतकोटिसङ्ख्याकद्रव्यप्रणयिता साभिलाषतेति याचकरूपोऽर्थश्च । स राजा सर्वस्वं दाता । न लोकेति निषेधात् कर्मणि षष्ठी न । सुरेशमिन्द्रं तृणमिव विजयते । विपराभ्यां जेरित्यात्मनेपदम् । विरोधाभासोऽलङ्कारः । शिखरिणी छन्दः । रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी । जीवेति । स शृङ्गारशेखरो मृधभुवि धनुषो जीवायाः प्रत्यञ्चाया आकृष्टिमाकर्षणं चक्रे । शत्रुर्गतासुरासीत् । धनुषो जीवाकृष्टिः शत्रोर्मरणमित्यसङ्गत्यलङ्कारः । चपलातिशयोक्तिश्च । मौर्वी जीवा गुणो गव्या शिञ्जा-

मुक्ता तेन क्षमेति त्वरितमरिबलैरुत्तमाङ्गैः प्रतिष्ठा
पञ्चत्वं द्वेषिसैन्ये स्थितमवनिपतिर्नाप संख्यान्तरं सः ॥

यत्र च राजनि राजनीतिचतुरे चतुरुदधिमेखलाया भुवो नायके शासति वसुमतीं पितृकार्ये वृषोत्सर्गः शशिनः कन्यातुलारोहणं योगे शूलव्याघातचिन्ता दानच्छेदः करिकपोलेषु दक्षिणवामकरणं दिङ्निश्चये शरभेदो दधिषु शृङ्खलाबन्धो वर्णग्रथनासूत्प्रेक्षाक्षेपः काव्यालङ्कारेषु लक्षदानच्युतिः सायकानां

---

शरासनं गुणे । इति हैमः । अरिबले मार्गणानां लक्षाभिरभवत् । तेन राज्ञा तेषामरीणां यशो लब्धम् । तेन राज्ञा क्षमा क्षान्तिर्मुक्तेत्यरिबलैस्त्वरितमुत्तमाङ्गैः प्रतिष्ठा मुक्ता । द्वेषिसैन्येऽरिबले पञ्चत्वं मृत्युः स्थितम् । स्यात् पञ्चता कालधर्म इत्यमरः । स राजा सङ्ग्रामान्तरं युद्धान्तरं न प्राप । एकस्मिन्नेव युद्धे रिपूणां नाशादिति भावः । युधमास्कन्दनं सङ्ग्राममित्यमरः । लक्ष्यं लक्षं शरव्यं चेति च । श्लेषोऽप्यत्र । स्रग्धरा छन्दः । स्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् । यत्र यस्मिन् चतुरुदधिमेखलाया भुवो नायके राजनीतिचतुरे राजनि वसुमतीं पृथिवीं शासति सति । परिसङ्ख्येयाह । पितृकार्ये वृषस्य नीलस्यान्यस्य वोद्वाहपूर्वकस्त्यागः । वृषो धर्मश्च । एवकारः सर्वत्र योज्यः । यद्यपि पदार्थान्तरेणापि परिसङ्ख्योपपद्यते तथापि ससन्ततिकस्यैव मृतिरिति ध्वनयितुममङ्गलस्य पितृकार्यस्य वर्णनमिति भावः । शशिन एव कन्या तुला च राशिस्तस्यामारोहणम् । तुलारोहणयोग्यस्यान्यस्यापराधिनोऽभावादिति भावः । योगे विष्कम्भादियोग एव शूलव्याघातौ योगविशेषौ तयोश्चिन्ता न तु शूलेन व्याघातस्ताडनं तस्य चिन्ता । करिकपोल एव दानस्य मदस्य विच्छेदो न तु वितरणस्य विच्छेदः । दिङ्निश्चय एव दक्षिणवामकरणम् । अस्मादयं दक्षिणोऽस्मादयं वाम इति । दक्षिणवामौ हस्तौ पादौ कर्णौ वा । तयोः करणं छेदनम् । कृञ् हिंसायाम् । बाहुलकाद्भावे ल्युट् । दधिष्वेव शरभेदः शरस्य दध्यग्रभागस्य भेदो नाशो न तु शरैर्बाणैर्भेदः । वर्णग्रथनास्वेव काव्यप्रसिद्धबन्धविशेषेष्वेव शृङ्खलाबन्धनं न तु शृङ्खलायाः पादबन्धेन बन्धः । काव्यालङ्कारेष्वेवोत्प्रेक्षाक्षेपः । उत्प्रेक्षाक्षेपावलङ्कारौ तद्युक्तः शब्दो लक्ष्यत इत्येकवचनोपपत्तिः । उत्प्रेक्षानवधानं तयाक्षेपो निन्दाऽतोऽन्यत्र नास्ति । उत्प्रेक्षानवधानेऽपि काव्यालङ्करणेऽपि च । इति विश्वः । अवर्णाक्षेपनिर्वादपरीवादापवादवत् । इत्यमरः । सायकानामेव लक्षस्य

क्षिपां सर्वविनाशः कोशसङ्कोचः कमलाकरेषु जातिहीनता दुष्कुलेषु न पुष्पमालासु शृङ्गारहानिर्जरत्करिषु न जनेषु दुर्वर्णयोगः कटकादिषु न कामिनीकान्तिषु गान्धारविच्छेदो रागेषु न पौरवनितासु खर्माभावो नीचसेवकेषु न परिजनेषु मलिनाम्बरत्वं निशासु न जनेषु चलरागता गीतेषु न विदग्धेषु वृषहानिर्निधुवनलीलासु न पौरेषु भङ्गुरत्वं रागविकृतिषु न चित्तेष्वनङ्गता कामदेवे न परिजने मारागमो यौवनोदयेषु न प्रकृतिषु द्विजाघातः सुरतेषु न प्रजासु रशनाबन्धो रतिकलहेषु न दानानुमति-

---

दानं खण्डनं तस्य च्युतिर्न तु लब्धदानस्य वितरणस्य च्युतिः। क्षिपामेव सर्वविनाशः सर्वनाशो व्यक्त्यभिप्रायेण बहुवचनम्। न तु सर्वेषां वीनां पक्षिणां नाशः। कमलाकरेष्वेव कोशस्य कुड्मलस्य सङ्कोचो न तु कोशस्य सङ्गृहीतधनस्य सङ्कोचः। दुष्कुलेष्वेव जात्या सामान्येन हीनता न पुष्पमालासु। तत्र जातीनां तत्कुसुमानां सत्त्वात्। जातिर्जातं च सामान्यमित्यमरः। जरत्करिष्वेव शृङ्गारहानिर्मण्डनहानिर्न तु जनेषु शृङ्गारस्य रसस्य हानिः। रसे नाट्ये च शृङ्गारः करिमण्डन एव च। इति विश्वः। कटकादिष्वेवाभरणेष्वेव दुर्वर्णस्य रजतस्य योगो न तु कामिनीकान्तिषु कुत्सितवर्णयोगः। दुर्वर्णं रजतं रूप्यमित्यमरः। रागेष्वेव गान्धारस्य स्वरस्य विच्छेदो न तु पौरवनितासु गान्धारं सिन्दूरं तस्य छेदः। एतेन न काप्येतद्राज्ये विधवेति ध्वनितम्। निषादर्षभगान्धारेत्यमरः। गान्धारं रक्तचूर्णं च सिन्दूरं रक्तवालुकम्। इति हारावली। नीचसेवकेष्वेव खर्मस्य परम्परागुह्यस्याभावो न तु परिजनेषु खर्मस्य वस्त्रभेदस्य पौरुषस्य वाभावः। खर्मः परम्परागुह्ये वस्त्रभेदेऽपि पौरुषे। इति धरणिः। निशास्वेव मलिनाम्बरत्वं न जनेषु। अम्बरं वस्त्रमाकाशश्च। गीतेष्वेव गानेष्वेव चलरागता न विदग्धेषु। रागो मान्वादिरनुरागश्च। निधुवनलीलास्वेव वृषस्य शुक्रस्य हानिर्न पौरेषु वृषस्य धर्मस्य हानिः। ज्येष्ठाम्बुधर्मशुक्रेषु मूषोऽसौ वृषभे वृषः। इत्युत्पलिनी। रागविकृतिष्वेव भङ्गुरत्वं न चित्तेषु भङ्गुरत्वं कुटिलत्वम्। कामदेव एवानङ्गताशरीरत्वं न परिजनेऽनङ्गतासम्बन्धिता। यौवनोदय एव मारस्य कामस्योदयो न परिजने मारस्य मारणस्योदयः। मृङ् प्राणत्यागे। भावे घञ्। सुरतेष्वेव द्विजैर्दन्तैराघातो न तु प्रकृतिषु राज्याङ्गेषु प्रजासु च द्विजानां ब्राह्मणानां पक्षिणां वा घातः। रतिकलहेष्वेव

ऽधरराागिता तरुणीषु न परिजनेऽकर्तनमलकेषु न पुरन्ध्रीषु निस्त्रिंशत्वमसीनां न पुरुषाणां करवालनाशो योधानां परं व्यवस्थितः। यस्य च महिषी दिग्गजकपोलमदलेखेवानन्दितालिगणा पार्वतीव सुकुमारा सर्वान्तःपुरप्रधानभूतानङ्गवती नाम। तयोश्च मध्यमोपान्ते वयसि वर्तमानयोः कथमपि दैववशात् त्रिभुवनविलोभनीयाकृतिः पुलोमतनयेवानन्दितसहस्रनेत्रा तनया वासवदत्ता नाम बभूव। अथ सा रावणभुजेवोल्लासित-गोत्रा परिणाममुपयात्यपि यौवनभरे परिणयपराङ्मुखी तस्थौ। एकदा तु विजृम्भमाणसहकारकोरकनिकुरम्बनिपतितमधुकर-

रसनायाः काञ्च्याः बन्धनं न दानानुमतिषु रसनाया जिह्वाया बन्धो जड़ता। स्त्रीकट्यां मेखला काञ्ची सप्तकी रसना तथा। रसज्ञा रसना जिह्वेत्युभयत्रामरः। तरुणीष्वेवाधरस्याधरोष्ठस्य रागिता न परिजनेष्वधरे नीचेऽनुरागिता। अलकेष्वेव कर्तनं छेदनं न पुरन्ध्रीषु स्त्रीषु सूत्रोत्पादनम्। दारा. स्यात् तु कुटुम्बिनी। पुरन्ध्रीत्यमरः। कर्तनं च द्वयोश्छेदे नारीणां सूत्रनिर्मितौ। इति विश्वः। असीनामेव खड्गानामेव निस्त्रिंशत्वम्। निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशस्तत्त्वम्। सङ्ख्याया-स्तत्पुरुषस्य वाच्य इति डच्। न पुरुषाणां निस्त्रिंशत्वं क्रूरत्वं निःकृपत्वं वा। निष्करुणेऽथ निस्त्रिंशः क्रूरे खड्गेऽपि चेष्यते। इत्युत्तरतन्त्रम्। योधानामेव परं केवलं करवालेन खड्गेन नाशो व्यवस्थितो नान्यत्र करस्य राजभागस्य हस्तस्य वा बलानां शिशूनां कृशानां वा नाशः। यस्य शृङ्गारशेखरस्य महिष्यनङ्गवती। नामेति प्रसिद्धावित्यन्वयः। दिग्गजकपोलमदलेखेवानन्दितोऽलीनाम्। पक्षे। आलीनां सखीनां गणो यया सा। पार्वतीव शोभनः कुमारः कार्त्तिकेयो यस्याः। पक्षे। सुकुमारातिमृदुला सर्वेष्वन्तःपुरेषु प्रधानभूता। प्रधानं क्लीवमेकत्वे प्रधानस्तूत्तमे पुमान् इति मेदिनी। तयोरनङ्गवती-शृङ्गारशेखरयोः। कथमपि यत्नेन। यत्नस्यापि स्वतोऽप्रभुत्वादाह। दैववशात्। त्रिभुवने विलोभनीया कृतिरभिलषणीयाकृतिः। अतएव पुलोमतनयेव शचीवानन्दितः सहस्रनेत्र इन्द्रो यया सा। पक्षे। आनन्दितं सहस्राणां नेत्रं यया। वासवदत्ता नाम तनया बभूव। अथ सा वासवदत्ता रावणभुजेवोल्लासितो गोत्रः पर्वतः। पक्षे। गोत्रं कुलं यया सा। दोर्दोषा च भुजा भुज इति मेदिनी। परिणाममुपयात्यपि यौवनभरे परिणयपराङ्मुखी तस्थौ। एकदा वसन्तकाल आगमेत्यन्वयः। विजृम्भमाण इति। सहकारः

मालामहकलझङ्कारजनितपथिकजनसञ्ज्वरः कोमलमलयमारुतोद्धृत-चूतप्रसवरसास्वादकषाय-कण्ठकलकण्ठकुहुरुतभरितसकलदिङ्मुखो विकचकमलखण्डलीयमानमत्तकलहंसकुलकोलाहलमुखरितसकलसरोवरः परभृतनखकोटिपाटितपाटलिकुट्मलवृन्तविवरविनिर्गतमधुधारासारशीकरकणनिकरसमालब्धदक्षिणसमीरणबाण व्रणितपथिकजनवधूहृदयो मधुमदमुदितकामिनीगण्डूषसीधुसेकपुलकितबकुलो मदनरसपरवशविलासिनीतुलाकोटिविकट-चटुलचरणारविन्दमन्दप्रहार-प्रहृष्ट-कङ्केलितरुशतः प्रतिदिशमश्लीलप्रायगीयमानगीतश्रवणोत्सुकखिन्नजनप्रारब्धचर्चरीगीताकर्णनमुह्यमानानेकपथिकशतो दुर्जन इव सतामरसो दुष्कुल इव जातिहीनो रावण इवापीतलोहितपलाशशतसेवितो

---

शब्दविशेषः। कोमलेति। कषायः सुरभिः कण्ठः स्वरो यस्य। द्रवेऽङ्गरागे सुरभौ रसे वर्णे कषाय इति विश्वः। सुरभिः स्यात्समोग्रेऽपीति रत्नकोशः। कण्ठो गले सन्निधाने ध्वनौ मदनपादपे। इति विश्वप्रकाशः। कलकण्ठः कोकिलः। तथाच: कोकिलः पिकः। कलकण्ठः काकपुष्ट इति हैमः। कुहूरुतम्। भरितं पूरितम्। विकचेति। परभृतेति। कोटिरग्रम् शीकरा बिन्दवः। शीकरोऽम्बुकणाः स्मृता इत्यमरः। समालब्धो मिलितः। व्रणितं सव्रणम्। मधुमदेति। नवाङ्कुरोद्गमेन सपुलक इवाचरित इति भावः। तथाचोक्तम्। पादाहतः प्रमदया विकसत्यशोकः शोकं जहाति बकुलो मुखसीधुसिक्तः। इति। तुलाकोटिर्मञ्जीरं तेन विकटं विरहिणां चटुलं चपलं यच्चरणारविन्दम्। प्रतिदिशमिति। वीप्सायामव्ययीभावः। शरदादित्वाट्टच्। अश्लीलप्रायं ग्राम्यप्रायम्। चर्चरी चाचर इति भाषायां प्रसिद्धम्। दुर्जन इव सतां साधूनामरसोऽप्रीतिजनकः। पक्षे। तामरसेन कमलेन सहितः। सतामरसः। पङ्केरुहं तामरसमित्यमरः। दुष्कुल इव जातिः सामान्यं तेन हीनः। जातिर्जातं च सामान्यमित्यमरः। पक्षे। जातिर्मालती। सुमना मालती जातिरित्यमरः। रावण इवापीतं लोहितं रुधिरं यैस्तादृशैः पलाशशतै रक्षःशतैः सेवितः। रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम्। इत्यमरः। हरिद्वर्णो राक्षसश्च पलाशस्त्वदनः स्मृतः। इति हैमः। पक्षे। आपीतैरीषत्पीतवर्णैर्लोहितै रक्तैः पलाशशतैः

महाशृङ्गारीव सुगन्धवहः सुराजेव समृद्धकुवलयो वास्तविक इव विवर्धितसुखाशः सत्कविकाव्यबन्ध इवाबद्धतुहिनः सत्पुरुष इव दोषानुबन्धरहितःकैवर्त इवाबद्धराजीवोत्पलशालः समृद्धकासार-शकुनिसार्थ इव निन्दितमरुबकः शक्र इवेन्द्राणीरुचिर्महावीर इवाधरीकृतदमनकः खिङ्ग इवाम्लानसुभगो वसन्तकाल आजगाम। अतिदूरप्रवृद्धेन मधुना जगति को वा न विक्रियते यद-

---

पलाशवृत्यशतैः सेवितः। रोहितो लोहितो रक्त इत्यमरः। शृङ्गारीव सुगन्धं सुगन्धद्र वहति तादृशः। पक्षे। शोभनो गन्धवहो वायुर्यस्मिन् सः। पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः। इत्यमरः। सुराजेव। न पूजनादिति निषेधान्न टच्। समृद्धः कुवलयो भूवलयो यस्मात्। पक्षे। समृद्धानि कुवलयानि यस्मिन्। वास्तविक इव तात्त्विकपदार्थ इव विवर्धिता सुखस्याशा येन। पक्षे। विशेषेण शरदपेक्षया वर्धितः सुखाशो राजतिमिषः। केचित् तु वास्तविको वाटिकापाल इत्याहुः। सुखाशो राजतिमिषः शोभनाशाप्रचेतसोः इति विश्वः। सत्कविकाव्यबन्ध इवाबद्धान्यप्रयुक्तानि तु हि नाव्ययानि यत्र। पक्षे। तुहिनं हिमम्। सत्पुरुष इव दोषस्यानुबन्धेन रहितः। पक्षे। दोषा रात्रिस्तदनुबन्धेन रहितः। रात्रिह्रासारम्भकत्वात् तदपक्षपातितेति भावः। मीने मेषे वसन्तः स्यात्। मीनराशिस्थसूर्यस्य नवांशोत्तरं दिनमानम्। ३०। ३। रात्रिमानम्। २९। ५७ इति प्रसिद्धं ज्योतिषे। कैवर्त इव दाश इवाबद्धा राजीवोत्पलशाला मत्स्यभेदा येन सः। राजीवाख्या मृगे मत्स्ये पद्मे राजोपजीविनि। इति विश्वप्रकाशः। कैवर्त्ते दाशधीवरौ। रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः। इति द्वयोरमरः। पक्षे। राजीवं पद्ममुत्पलं कुवलयं शाला द्रुमाः। स्यादुत्पलं कुवलयमित्यमरः। शालः पादपमात्रे स्यात् प्राकारे शङ्कुद्रुमे। इति विश्वप्रकाशः। समृद्धकासारस्तत्सम्बन्धी शकुनिसार्थः पक्षिसमूहः। समीरणो मरुबकः। कासारः सरसी सरः। शकुन्तिपक्षिशकुनि इति विश्वमरः। मरुवा इति लोके। यद्वा मरुबकः पिण्डीतकः। पिण्डीतको मरुबकः श्वसनः करहाटकः। इत्यमरः। मैनफल इति लोके। पक्षे। मरुबको मरुदेशस्थो बकः। शक्र इवेन्द्राणी शची तस्यां रुचिरभिलाषो यस्य। पक्षे। इन्द्राणी निर्गुण्डी। सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि। इत्यमरः। मेउडी इति ख्याता लोके। वसन्तप्रकरण एव दमनकश्च्यवर्णनात्महावीर इवेति प्रक्षिप्तः पाठः। खिङ्ग इव विट इवाम्लानसुभगः। पक्षे। अम्लानैर्महासहाभिः सुभगः। अम्लानस्तु महासहेत्यमरः। कण्ठश्रेया

तिमुक्तको मुनिरपि विचकास। कुसुमशरस्य नवचूतप्रसवशर-मूलनिलीना मधुकराली यन्त्रणेव रेजे। वृन्तविनिर्गतविचकिल-कलिकातले मञ्जु गुञ्जन् मधुकरो मकरकेतोस्त्रिभुवनविजयप्र-याणशङ्खध्वनिमिव चकार। नवयावकपङ्कपल्लवितसनूपुरतरुणीच-रणप्रहारानुरागवशान्नवकिसलयच्छलेन तमिव रागमुदवहद-शोकः। मधुरमधुपरिपूरितकामिनीमुखकमलगण्डूषसेकादिव तद्रसमात्मकुसुमेषु बिभ्रद्बकुलतरू रराज। अन्तरान्तरा निपति-तमधुकरनिकरकिर्मीरितः कङ्केलिगुच्छोऽर्धनिर्वाणमनोभवचिता-चक्रानुकारी पथिकजनहृदयदाहमुवाह। विकचविचकिलरा-जिरलिकुलशबलेन्द्रनीलमणिमयी मुक्तावलीव मधुश्रियो रुरुचे। विरहिणां हृदयमथनाय कुसुमशरस्य चक्रमिव नागकेसरकुसुम-मशोभत। पथिकजनहृदयमत्स्यं ग्रहीतुं मकरकेतोः पलाश

---

इति ख्याता। अतिदूरप्रवृद्धेन मधुना वसन्तेन मद्येन वा जगति को न विक्रियते। कर्मणि लट्। अतिमुक्तको मुनिरपीति स्पष्टम्। पक्षे। अतिमुक्तकः पुण्ड्रको मुनिरगस्त्यो विच-कास। उत्प्रेक्षयाह। कुसुमशरेति। शराणां पत्ररचना यन्त्रणा परिकीर्तिता। इति हारावली। यन्त्रणं स्यान्नियमने बन्धने रक्षणेऽपि च। इति विश्वप्रकाशः। शेषं स्पष्टम्। वृन्तेति। वृन्तात् प्रसवबन्धनाद्विनिर्गतानां विचकिलानां मल्लिभेदानां कलिकानां तले मञ्जु गुञ्जन् मधुकरो मधुव्रतो मकरकेतोस्त्रिभुवनविजयप्रयाणशङ्खध्वनिमिवाकरोत्। स्मृतो विचकिलो मल्लीप्रभेदे मदनेऽपि च। इति विश्वप्रकाशः। अशोको नवयावकपङ्केन नव-लाक्षारसेन पल्लवितं रक्तं सनूपुरं समञ्जीरं तरुणीचरणं तस्य प्रहारस्तदनुरागवशान्नवकि-सलयच्छलेन तं रागमिवोदवहत् भवेत् पल्लवितं लाक्षारक्ते सप्रसवे तते। इति विश्व-प्रकाशः। बकुलतरुर्मधुना मद्येन परिपूरितं यत् कामिनीमुखकमलं तस्य गण्डूषसेकात् तद्रसमात्मकुसुमेषु बिभ्रदिव रराज। सह रराजेत्यत्र रो रीति लोपे ढ्रलोप इति दीर्घः। अन्तरा निपतितो मधुकरैः किर्मीरितश्चित्रः कङ्केलिगुच्छोऽशोकगुच्छोऽर्धं निर्वाणमर्धोपशान्तं यन्मनोभवचिताचक्रं तदनुकारी विरहिणां हृदयदाहं मनस्तापमुवाह। वह प्रापणे। निर्वाणमस्तङ्गमनमिति विश्वः। अलिकुलशबला विकचविचकिलराजिर्मधुश्रिय इन्द्रनील-मणिमयी मुक्तावलीव रुरुचे। विरहिणामिति स्पष्टम्। पथिकजनहृदयमत्स्यं ग्रहीतुं

इव पाटलिपुष्पमदृश्यत। कन्दर्पकेलिसम्पल्लम्पटलाटीललाटतटधम्मिल्लस्खलनमिलितपरिमलसमृद्धमधुरिमगुणः कामकलाकलापकुशलचारुकर्णाटसुन्दरीस्तनकलशघुसृणधूलिपरिमलामोदवाही करणरसिककान्तकुन्तलीकुन्तलोल्लासनसङ्क्रान्तपरिमलमिलितालिमालामधुरतरझङ्काररवमुखरितनभस्तलो नवयौवनरागतरलकेरलीकपोलपालिपत्त्रावली-परिचयचतुरश्चतुःषष्ठिकलाकलाप-विदग्धमुग्धमालव-नितम्बिनी-नितम्बबिम्ब-संवाहनकुशलः सुरतश्रमपरवशान्ध्रीनीरन्ध्रपीनपयोधरभारनिदाघजलकणनिकरशिशिरितो मलयानिलो ववौ। अत्रान्तरे वासवदत्तासखीजनाद्विदिताभिप्रायः शृङ्गारशेखरः स्वसुतायाः स्वयंवरार्थमशेषधर-

---

कुसुमकेतोः पलाव इव पक्षिन मांसेनावति मत्स्यानां तृप्तिं जनयति हन्ति वा पलावोवडिशं तद्वत् पाटलिपुष्पमदृश्यत। सदारैरिति शेषः। पाटलिः पाटला मोघेत्यमरः। पाडला। इति लोके। वायोः शृङ्गारितां पुरस्कृत्य तत्तद्देशाङ्गनाभिः सह सम्भोगमनुप्रासेनाह। मलयानिलो ववाविति सम्बन्धः। कन्दर्पकेलिसम्पत् कामक्रीडासम्पत्तिस्तस्यां लम्पटाः सक्ता लाट्यो लाटदेशस्त्रियस्तासां ललाटतटः। धम्मिल्लः संयताः केशास्तयोर्मेलनेन मिलितः परिमलो जनमनोहरो गन्धस्तेन समृद्धमधुरिमगुणः। धम्मिलः संयताः कचा इत्यमरः। कामकलाकलापकुशलाः प्रवीणा याः कर्णाटसुन्दर्यस्तद्देशाङ्गनास्तासां स्तनकलशेषु घुसृणं तद्धूलिपरिमलस्तदामोदोऽतिनिर्हारी गन्धस्तद्वाही। स्तनस्पर्शो ध्वनिरत्र। कुङ्कुमं पीतकाविरं घुसृणं कुसुमात्मकम्। इति हारावली। आमोदः सोऽतिनिर्हारीत्यमरः। करणेषु गीताङ्गहारसंवेशक्रियादिषु रसिकाः कान्ताः कुन्तल्यः कुन्तलदेशाङ्गनास्तासां कुन्तलानां केशानामुल्लासनेन सङ्क्रान्तपरिमलस्तेन मिलितालिमाला भ्रमरपङ्क्तयस्तासां मधुरतरझङ्काररवैर्मुखरितनभस्तलः। अनेन कचग्रहणं मथितं च ध्वनितम्। करणं साधने चैव कायकायस्थकर्मसु। गीताङ्गहारसंवेशक्रियाभेदेन्द्रियेषु च। बालवादी च करणः स्मृतः शूद्राविशोः सुते। इति विश्वप्रकाशः। नवयौवनरागतरलकेरलीनामित्यादि। कपोलपालिपत्त्रावलीपरिचये सम्बन्धे चतुरः। अत्र परिचयेन निर्माणमपि ध्वनितम्। नितम्बसंवाहनं तत्स्पर्शोऽपि। स्पष्टम्। अत्रान्तरे वासवदत्तायाः सखीजनाद्विदिताभिप्रायः शृङ्गारशेखरः स्वसुतायाः वासवदत्तायाः स्वयंवरार्थं समग्रनृपतीनां सङ्गममकरोत्। ततो

पितलभाजां राज्ञामेकत्र सङ्गममवैक्षीत्। ततो दग्धकृष्णागुरु-परिमलामोदमोहितमधुव्रतव्रातबहलगुमगुमायितमुखरितमति-रभसहासच्छटादीधितिधवलिमपरिमिलितमनेक-परिहासकथा-कलापविदग्धशृङ्गारिजनसमाकुलं दह्यमानसुगन्धिसौरभाकृष्टपुरो-पवनषट्पदकुलसमाकुलमर्जुनसमरमिव नन्दिघोषमुखरितदिग-न्तरं मञ्चमारुरोह वासवदत्ता। तत्र च केचित् कलाङ्कुरा एव विजितनगरमण्डना अपरे पाण्डवा इव दिव्यचक्षुः कृष्णागु-रुपरिमिलिता अन्ये शरद्दिवसा इव सुदूरप्रवृद्धसुखाशा इतरे व्याहन्तुमुद्यता इव स्वप्नलार्थिनः केचिद्व्याधा इव शकुनश्रावकाः

---

भूभुजां सम्मिलनोत्तरं वासवदत्ता मञ्चमारुरोहेत्यन्वयः। दग्धः कृष्णागुरुः कालागुरुस्तदा-मोदमोहितमधुव्रतव्रातानां बहलगुमगुमायितेन प्रचुराव्यक्तशब्देन मुखरितम्। अतिरभ-सेति। चेटीनामित्यादिरस्य। अनेकेषां भूपतीनां परिहासः कुलवयोरूपगुणहीनत्वेन परिहासः। कथाकलापः योग्यानां वंशादिवर्णनसमुदायःस्तत्र विदग्धश्चतुरस्तज्ज्ञो यः शृङ्गारिजनो लोको नायिकानायकरसभावाभिज्ञःसखीरूपस्तेन समाकुलं व्याप्तम्। जनो लोके महर्लोकात् परलोके च पामरे। इति विश्वप्रकाशः। कपोलाद्विकसितोल्लासो भिन्नोष्ठः स महात्मनाम्। विटीर्यामस्य मध्यानामधमानां सशब्दकः॥ सहास इति वाग्भटालङ्कारः। तथा च कालिदासः। ततो नृपाणां श्रुतहृत्सवेगेति। यद्वा। अनेक-परिहासकथाकलापे द्वयोः परस्परानुरागानन्तरमनेकपरिहासकथाकलापे विदग्धः। शेषं पूर्ववत्। तथा च कालिदासः। तथागतायां परिहासपूर्वं सख्यां सखी वेत्रधरा बभाषे। आर्ये व्रजामोऽन्यत इत्यथैनां वधूरसूयाकुटिलं ददर्श॥ इति। दह्यमानेति पूर्वविशेषणेन गतार्थम्। अर्जुनसमरमिव नन्दिघोषेण तदभिधानेन रथेन मुखरितदिगन्तरम्। तदुक्तम्। गाण्डीवं धनुरेतस्य हनूमान् ध्वजभूषणम्। नन्दिघोषो रथश्चास्य गतिस्तस्य न भूतले॥ इति पद्मे। नन्दिरानन्दनो घोषस्तूर्यादिशब्दस्तेन मुखरितदिगन्तरम्। नन्दिरानन्दने प्रोक्तः प्रतीहारे हरस्य च। इति विश्वप्रकाशः। यद्वा नन्दिर्जामातृसुहृज्जन इत्यर्थः। तेषां घोषेणेति पूर्ववत्। नन्दिरानन्दजामातृमित्रयोरपि चेष्यते। इत्युत्पलरत्नम्। तत्र तेषु केचित् कलाङ्कुरा इव मूलदेवा इव विजितनगरमण्डना विजिततदभिधानवेश्याः कलाङ्कुरेण कामशास्त्रकलाभिज्ञतया नगरमण्डना वेश्या जितेति वार्ता। कर्णीसुतो मूलदेवो मूल-

केचिदाखेटका इव रूपानुसारप्रवृत्ताः केचिज्जैमिनिमतानुसारिण इव तथागतमतध्वंसिनः केचित् खञ्जना इव सांवत्सरफलदर्शिनः केचित् सुमेरुपरिसरा इव कार्तस्वरमयाः केचित् विकचकुमुदाकरा इव भास्वद्दर्शननिमीलिताः केचिद्धार्तराष्ट्रा इव विश्वरूपावलोकनजनितेन्द्रजालप्रत्ययाः केचिदात्मनि वारणवुद्धग्रा बलवन्तोऽपि सुवाह्याः केचित् पाणिग्रहणार्थिनोऽप्यसुकरं मन्यमानाः केचिदधरीभूता अपि स्थिराः केचित् पाण्डुपुत्रा इवाचहृदयज्ञानहृतचमाः केचिद् बृहत्कथानुबन्धिनो गुणाढ्याः केचित् तिर्यग्गतयः सुगन्धवाहाः केचित् कौरवसैनिका इव द्रोणाशासूचकाः केचित् कुमुदाकरा इवासोढशूरभासः स्थिता राजपुत्राः। तानेकैकशः

---

मद्रः कलाङ्कुरः। इति हारावली। विजितं नगरस्य मण्डनं भूषणं यैस्ते। सर्वोत्कृष्टभूषणधारणादिति भावः। पक्षे। विना गरुडेन जितं नगरं वाणपुरं तस्य मण्डना वाणासुरतुल्या राक्षसा इवेत्युपहासोऽपि। अपरे पाण्डवा इव दिव्यचक्षुः कृष्णः कृष्णा द्रौपदी गुरवो द्रोणादयो द्रौपदीगुरवो वा तैर्मिलिताः। पक्षे। दिव्यचक्षुषः सुलोचनाश्च ते कृष्णागुरुपरिमिलिताश्च कालागुरुधूपधूपायितसर्वाङ्गास्ते। पक्षे। दिव्यचक्षुषोऽन्धाः कृष्णाः श्यामवर्णा अगुरुपरिमिलिता गुरुरक्षणरहिता इत्युपहासः। दिव्यचक्षुः सुनयने कृष्णेऽन्धे सिंहकेऽपि च। इति धरणिः। विदुः परिमलं गन्धे रक्षणेऽपि चेति विश्वः। अन्ये शरद्दिवसा इव सुदूरं प्रवृद्धाः सुखाशा राजतिमिषा येभ्यस्ते। सुखाशानां वसन्ते वृद्धेरिति भावः। पक्षे। सुदूरं प्रवृद्धा सुखस्य वासवदत्तारतिमहोत्सवस्याशा येषां ते। पक्षे। सुदूरं प्रवृद्धा सुष्ठु खमिवाकाशमिवाशा येषां ते। ईप्सिता लब्धिर्व्यर्थत्वादिति भाव इत्युपहासः। अपरे व्याहन्तुं परान् हन्तुमुद्यता इव स्वबलार्थिनः स्वसैन्यार्थिनः। पक्षे। सुष्ठु शोभनाबला वासवदत्ता तदर्थिनः। स्वस्मै बलं पराक्रममर्थयन्ते वैद्यादिभ्यस्त इत्युपहासः। केचिदाखेटो मृगया तदासक्ता रूपस्यानुसरणे प्रवृत्ताः। केचिज्जैमिनिमतानुसारिणो मीमांसानुसारिणस्त इव तथागतानां नास्तिकानां मतध्वंसिनः। सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः। इत्यमरः। पक्षे। तथागतानां यथा स्वगेहे स्थितास्तथागतानां न तु सभोचितवस्त्रभूषणधारिणां सौन्दर्याभिमानजुषां मतम्। किमिव हि मधुराणां मण्डनं नाकृतीनामित्येवं रूपं तद्ध्वंसिनस्तन्निन्दकाः। पक्षे। तथागतं कुलपरम्परोचितं

समवलोक्य विरक्तहृदयासौ कुमारिका तस्मात् कर्णवंशादवततार। अथ तस्यामेव रात्रौ स्वप्ने वालिनमिवाङ्गदोपशोभितं कुब्जकण्ठमिव हारिकण्ठं कनकमृगमिव रामाकर्षणनिपुणं जयन्तमिव वचनामृतानन्दिततुङ्गश्रवसं कृष्णमिव कंसहर्षं न कुर्वन्तं महाभिषमिव विलसत्कारकमादिकन्दं रूपपादपस्या रोहणगिरिं शृङ्गाररसस्य प्रभवगिरिं सुन्दरकथानदीनां सुरभिमासं वैदग्ध्यरसहकारस्यादर्शतलं सौजन्यमुखस्यादिबीजं विद्यालतानां स्वयंवरपतिं

---

मतं शैवादिमतं तद्दर्शिनो नायकाः। आचारहीनतावोपहासबीजम्। तथा च श्रीहर्षः। जनः किलाचारमुच विगायतीति। केचित् खञ्जना इव सांवत्सरी ज्योतिषिकस्तद्वत् फलदर्शिनः। यथा ज्यौतिषिको निध्यादिप्रश्ने निखिलरूपफलं दर्शयति। एवं खञ्जना अपि सुरतादिना निध्यादिफलं दर्शयन्तीत्यर्थः पक्षे। सांवत्सरं फलं वर्षफलं दर्शयन्ति स्त्रीपुत्रादिलाभार्थं तादृशास्ते। सांवत्सरो ज्यौतिषिक इत्यमरः। द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्। आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः॥ इति नियमरहितत्वं नाधीरत्वं व्यङ्ग्यमुपहासबीजम्। केचिन्मेरुपरिसरा इव प्रान्तभूमय इव कार्तस्वरं सुवर्णं तन्मयाः। पक्षे। कार्तस्वरमयाः। सुवर्णमयाः पक्षे। का ईषद्वार्तस्वरमया वा। रुक्मं कार्तस्वरं जाम्बूनदमित्यमरः। कृपणतोपहासबीजम्। केचिद्विकचकुमुदाकरा इव भास्वद्दर्शनेन सूर्यदर्शनेन निमीलिताः सङ्कुचिताः। कुमुदानां सङ्कोचस्तदाश्रये। मञ्चाः क्रोशन्तीतिवदुपचारात्। भास्वद्विवस्वत्सप्ताश्च इत्यमरः। पक्षे। भास्वतोऽतितेजोयुतस्य जनस्य दर्शनेन निमीलिता निमीलितनयनाः। वासवदत्तादर्शनादेव येषामन्यं प्रकारस्तेषामये का गतिरिति स्पष्ट एवोपहासः। केचिद्धार्तराष्ट्रा इव विश्वरूपस्य कृष्ण दर्शितविश्वरूपस्य दर्शनेन जनितेन्द्रजालप्रत्ययाः अनेन मायाजालमेव कृतमिति धार्तराष्ट्राभिप्रायः। पक्षे। विश्वस्य जगतो रूपं सौन्दर्यं यस्यां त्रैलोक्यसमवायिसौन्दर्यपरमाणुनिर्मिता वासवदत्ता तस्या दर्शनेन जनितेन्द्रजालप्रत्ययाः। तथा च कन्दर्पकेतुवर्णनप्रस्तावे मूलकार एव स्वस्यैव नैपुण्यस्य सौन्दर्येत्यादि स्पष्टमेव वक्ष्यति। अतो द्वयोरभूतपूर्वं सुरूपयोः संयोजनम्। अतएव स्वप्नदर्शनोत्तरं कन्दर्पकेतौ साभिलाषा इयैवेत्यादिनानुरूपभर्तृसङ्गता अन्या निन्दयिष्यति। अतस्त्वश्लमव व्यङ्ग्यम्। केचिदात्मनि स्वस्मिन् वारणबुद्ध्या गजबुद्ध्या बलवन्तोऽति सबला अपि सुवाहाः सुखेन वाहो वहनं येषां तादृशाः। वह प्रापणे

कीर्तेः स्पर्धागृहं लक्ष्मीसरस्वत्योरादिगृहं शीलसम्पदां कोशमिव महासौन्दर्यस्य त्रिभुवनविलोभनीयाकृतिं युवानं ददर्श। स च चिन्तामणिनाम्नो राज्ञस्तनयः कन्दर्पकेतुर्नाम। सा च स्वप्न एव नामादिकमश्रौषीत्। अनन्तरमसौ प्रजापतेः रूपनिर्माणकौशलमिदं मन्ये स्वस्यैव नैपुण्यस्य सौन्दर्यदर्शनोत्सुकमनसा कमलभुवा जगत्त्रयसमवायिरूपपरमाणूनादाय विरचितोऽयमन्यथा कथमिवास्य कान्तिविशेष ईदृशो भवति। वृथैव दमयन्ती नलस्य

---

घञ्। यो ह्यतिबलः पुमान् स न पुरुषान्तरेण सुखोद्वहनीय इति विरोधः। पक्षे। शोभना वाहा अश्वा येषां ते। यद्वा वाहा भुजा येषाम्। वाहौ बाहुतुरङ्गयोरिति शाश्वतः। पक्षे। सुवाहाः शोभनाश्वजातिपुरुषास्ते वृषजातिपुरुषा इव न यथाकथञ्चिदपि जातित्रयनायिकोपयुक्ता इति दिक्। प्रपञ्चस्तु रतिरहस्यादौ द्रष्टव्यः। अत्रोपहासबीजं तत एवावधेयम्। पाणिग्रहणार्थिनो वासवदत्तापाणिग्रहणार्थिनः।असुकरं दुष्करं मन्यमानाः स्वेच्छासत्त्वेऽपि स्वयंवराधीनत्वात् तस्य। पक्षे। असुकरसमवः प्राणान्तकारकं प्राणप्रदम्। केचिदधरीभूता अप्यपृथ्वीभूता अपि स्थिराः पृथिव्य इति विरोधः। विश्वम्भरा स्थिरा। धरा धरित्रीत्यमरः। पक्षे। अधरीभूता हीनतामापादिता अपि स्थिरा निश्चला इति परिहारः। स्फुटमेवात्रोपहासबीजं निर्लज्जतारूपम्। केचित् पाण्डुपुत्रा इवाचक्रहृदयस्य पाशकतत्त्वस्याज्ञानाद्धृतक्षमा हृतभूमयः। पक्षे अक्षाणां वासवदत्तासम्बन्धिनामिन्द्रियाणां हृदयस्य तत्त्वस्य मनसो वाज्ञानेनानवबोधनेन हृतक्षमा गतशान्तयः। इयमङ्गीकरिष्यति न नेति व्याकुलीभूता इति भावः। तरलताव दोषः। केचिद्बृहत्कथानुबन्धिनो बृहत्कथाख्यग्रन्थकर्तारो गुणाढ्यास्तन्नामानः कवयः। बहुवचनं पूजार्थम्। पक्षे। बृहत्कथानुबन्धिनो बहुकथावक्तारो गुणाढ्या गुणैः सन्ध्यादिभिरन्यैराढ्याः। पक्षे। गुणैर्वागुरादिभिराढ्याः। सर्वदा मृगयासक्ततया व्यसनिता दोषः। केचित् तिर्य्यग्गतयः कुटिलमार्गगामिनः सुगन्धवाहाः सुगन्धधारिणः। पक्षे। तिर्य्यग्गतयो वायवः। वायोस्तिर्यग्गमनं वैशेषिकभाष्ये। सुगन्धवाहाः शोभनवायवः। केचित् कौरवसैनिका इव द्रोणाचार्य्यद्वाःस्था जयाशा तत्सूचकाः। द्रोणाचार्य्योऽस्मत्सेनापतिरिति नास्माकं पराजय इत्येवं परस्परसूचकाः। पक्षे। द्रोणः काकस्तस्यादाशा वासवदत्ताप्राप्त्याशा तत्सूचकाः। उक्तं च स्थानस्थितप्रकरणे वसन्तराजे। इष्टार्थदोऽश्वादिकवाहनस्थस्कन्धादिसंस्थस्तदवाप्तिकारी। वध्वागमं जल्पति तोरणस्थो हृद्यार्थदो हृद्यतरुस्थितश्च॥ इत्यादि।

कृते वनवासवैशसमवाप। मुधैवेन्दुमती महिष्यप्यजानुरागिणी बभूव। अफलमेव दुःषन्तस्य कृते शकुन्तला दुर्वाससः शापमनुबभूव। निरर्थकं मदनमञ्जरी नरवाहनदत्तं चकमे। निष्कारणमेवोरुयुगविनिर्जितरम्भा रम्भानलकूबरमचीकमत विफलमेव धूमोर्णा स्वयंवरार्थागतानेकदेवगणगन्धर्वसहस्रेषु धर्मराजमाचकाङ्क्षदिति बहुविधं चिन्तयन्ती विरहमुर्मुरमध्यमधिरूढेव वाडवाग्निशिखाकवलितेव कालाग्निरुद्रपावकग्रस्तेव पातालगुहाप्रविष्टेव शून्यकरणग्रामे हृदये लिखितमिवोत्कीर्णमिव प्रत्युप्तमिव कीलितमिव निगलितमिव वज्रलेपघटितमिवास्थिपञ्जर-

---

द्रोणः कृपीपतौ कृष्णकाके स्यादाढकेऽपि च। इति विश्वप्रकाशः। केचित् कुमदनजा इवाभीष्टशूरभाभोऽभीष्टसूर्यकान्तयः। पक्षे। शूरो वीरः। तालव्यादिः शूरशब्दः सूर्यवाचकोऽपि। शूरश्चारुभटे सूर्ये इति विश्वः। सुभटे शूरः सूर्ये च दन्त्येऽपीत्यूष्मविवेकः। तानेकैकशः समवलोक्य विरक्तहृदया। वर्णितदोषदर्शनात्। अमी कुमारिका कर्णवंशान्मञ्चादवततार। सङ्ख्यैकवचनाच्च वीप्सायामित्यत्र चकारो वीप्सायामित्यस्यानन्तरं द्रष्टव्यः। सङ्ख्यैकवचनाद्वीप्सायां च। चात् स्वार्थेऽपि। स चाभिधानस्वभावादेकशब्दादेव। तेनैकशब्दाद्वीप्सायां शसभावे द्विर्वचनेऽत्यन्तस्वार्थिके शसि पक्षे जातैकैकश इत्येतत्सिद्धिः। कर्णवंशो भवेन्मञ्च इति हारावली। अथागतेषु राजकुमारेषु विरागोत्तरं तस्यामेव तद्दिवससम्बन्धिन्यामेव रात्रौ स्वप्ने निद्रायां सा युवानं ददर्शेत्यन्वयः। वालिनमिवाङ्गदेन तन्नामकवानरेण। वालिनमिवेत्यादिधर्मराजमाचकाङ्क्षदित्यन्ते माधुर्यं गुणः। पक्षे। अङ्गदेन केयूरेण। कुहूकण्ठमिव कुहू इति कण्ठो ध्वनिरस्य तमिव कोकिलमिव हारिकण्ठं मनोहरस्वरम्। पक्षे। हारी हारयुक्तो मनोहरो वा कण्ठो गलो यस्य तम्। कनकमृगमिव रामस्य दाशरथेराकर्षणनिपुणम्। मारीचनामा राक्षसः कनकमृगो बभूवेति प्रसिद्धं रामायणे। पक्षे। रामाणां स्त्रीणाम्। जयन्तमिवेन्द्रपुत्रमिव वचनामृतेनानन्दितो वृद्धश्रवा इन्द्रो येन तम्। वृद्धश्रवाः शुनासीरः पुरुहूतः पुरन्दरः। जयन्तः पाकशासनिरिति द्वयोरमरः। पक्षे। वचनामृतैरानन्दिते वृद्धानां श्रवसी श्रोत्रे येन तम्। श्रुतिः स्त्री श्रवणं श्रव इत्यमरः। कृष्णमिव कंसस्य हर्षं तं न कुर्वन्तम्। तदन्तकत्वादित्यर्थः। पक्षे। कं जनं न सहर्षं कुर्वन्तमपि तु सर्व-

प्रविष्टमिव मर्मान्तरस्थितमिव मज्जासारशबलितमिव प्राणपरीतमिवान्तरात्मानमधिष्ठितमिव रुधिराश्रयद्रवीभूतमिव पललसंविभक्तमिव कन्दर्पकेतुं मन्यमानोन्मत्तेव बधिरेव मूकेव शून्येव निरस्तकरणग्रामेव मूर्च्छागृहीतेव ग्रहग्रस्तेव यौवनसागरतरङ्गपरम्परापरिगतेव रागरज्जुभिरपवारितेव कन्दर्पकुसुमबाणैः कीलितेव शृङ्गारभावनाविषघूर्णितेव रूपपरिभावनाशल्यखिलितेव मलयानिलापहृतजीवितेव प्रियसख्यनङ्गलेखे! वितर हृदये पाणिपद्मं दुःसहो विरहसन्तापः। मुग्धे मदनमञ्जरि! सिञ्च चन्दनोदकेन सरले वसन्तसेने! संवृणु केशपाशं तरले तरङ्गवति!

---

मेव। महामेघमिव विलसत्करकं स्फुरद्वर्षोपलम्। वर्षोपलन्तु करकेत्यमरः। पक्षे। करो हस्त एव करकः समासान्तः कप्रत्ययः। रूपपादपस्य सौन्दर्यतरोरंगादिकन्दम। शृङ्गाररसस्यारोहणगिरिं प्रादुर्भावाद्रिम्। रुह बीजप्रादुर्भावे। सुन्दरकथानदीनां रम्यकथानदीनां प्रभवगिरिमुत्पत्तिगिरिम्। सुरभिर्वसन्तस्तत्सहितमासमिव वैदग्ध्यसहकारस्य। सौजन्यमिव सुखं तस्यादर्शतलम्। विद्यालतानामादिबीजम्। कीर्त्तेः स्वयं वापतिम्। लक्ष्मीसरस्वत्योः स्पर्द्धागृहम्। तथा च कालिदासः। निसर्गभिन्नास्पदमेकसंस्थमस्मिन् द्वयं श्रीश्च सरस्वती च। इति। शीलसम्पदामादिगृहम्। महासौन्दर्यस्य कोशमिव। त्रिभुवने त्रिभुवनस्य वा विलोभनीया विलोभनकर्त्री आकृतिर्यस्य तम्। कर्त्तव्यनीयर्। स इति स्पष्टम्। अनन्तरं जाग्रदवस्थायामिति बहुविधं भाषमाणा सखीजनेन समं सुमूर्च्छेत्यन्वयः। प्रथमे त्वभिलाषः स्याद्द्वितीये चिन्तनं भवेत्। तृतीये तु स्मृतिः प्रोक्ता चतुर्थे गुणकीर्त्तनम्॥ उद्वेगः पञ्चमे प्रोक्तो विलापः षष्ठ उच्यते। उन्मादः सप्तमे प्रोक्तो भवेद्व्याधिस्तथाष्टमे॥ नवमे जड़ता प्रोक्ता दशमे मरणं भवेत्। इति भरतोदिता दशावस्था वर्णयंश्चतुर्थीं दशां वर्णयति। अहो प्रजापते रूपनिर्माणकौशलमिदं मन्य उत्प्रेक्षे। मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिव शब्दोऽपि तादृशः॥ स्वस्यैव नैपुण्यस्य प्रजानिर्माणनैपुण्यस्य सौन्दर्यदर्शनोत्सुकमनसा कमलभुवा ब्रह्मणा जगत्त्रयसमवायिरूपपरमाणूनादाय निर्मितः। द्रष्टैवेत्यादि। इन्दुमती भोजराजतनया अजे तदभिधाने राजन्यनुरागिणी वृथैव बभूव। अजस्येन्दुमत्यपेक्षया हीनरूपत्वादिति भावः। तथा च कालिदासः। कुलेन कान्त्या वयसा गुणैन गुणैश्च

विकिर केतकीधूलिं वामे मदनमालिनि! वीजय शैवलदलेन चपले चित्रलेखे! लिख चित्रे चित्तचौरं जनं भाविनि विलासवति! निक्षिप मुक्ताचूर्णनिकरं रागिणि रागलेखे! स्थगय नलिनीदलसमूहेन पयोधरभारं कान्ते कान्तिमति! मन्दमपनय बाष्पबिन्दून्। एहि भगवति निद्रे! ऽनुगृहाण मां धिगिन्द्रियैरपरैः किमिति लोचनमयान्येव ममाङ्गानि न कृतानि विधिना भगवन् कुसुमायुधायमञ्जलिस्तेऽनुचरो भव भाववति तादृशे जने

---

तैस्तैर्विनयप्रधानैः। त्वमात्मनस्तुल्यममुं हयोष्व रत्नं समागच्छतु काञ्चनेन॥ इत्यत्रात्मनस्तुल्यमित्यनेनोपमानकल्पनेनास्या अधिकगुणवत्त्वप्रतिपादनात्। अत एव रत्नं काञ्चनेन समागच्छत्विति सङ्गच्छते कन्दर्पकेत्यपेक्षयाजादीनां कुरूपत्वमिति तासां तेष्वनुरागो हर्षश्चेति तु स्पष्टमेव। महिष्याः सैरन्ध्र्या भजे भागेऽनुरागो विरोधाभासः। एतन्मूलकोऽपि परिहासः। यद्यप्यवरणसमय इन्दुमत्या न महिषीत्वं तथापि वासवदत्तापरिहासदशायां तत्त्वेन न काप्यनुपपत्तिः। अफलमिव दुःषन्तस्य राज्ञो न लोकाव्ययेति निषेधस्तु कारकषष्ठीविषयः। कृते तादर्थ्येऽव्ययम्। दुर्वाससः शापं यस्मिन्नासक्तहृदया स जनस्त्वां न स्मरिष्यतीत्येवं रूपमनुबभूव। अर्थे कृतेऽव्ययं तावत् तादर्थ्ये वर्त्तते द्वयम्। इति कोषसारः। स्पष्टं चैतदभिज्ञानशाकुन्तले। विचिन्तयन्ती यमनन्यमानसा तपोधनं वेत्सि न मामुपस्थितम्। स्मरिष्यति त्वां न स बोधितोऽपि सन् कथां प्रमत्तः प्रथमं कृतामिव॥ इति। मदनमञ्जरी तन्नामिका स्त्री नरवाहनदत्तं राजविशेषं निष्कारणमेवावचकमत। कमेर्णिङभावे कमेश्चेरिति वार्त्तिकाच्चङ्। ऊरुयुगविनिर्जितरम्भा रम्भा स्वर्वेश्या निष्कारणमेव नलकूबरं कुबेरसुतमचीकमत। अवाप्यसमता। तथा च श्रीहर्षः। अधत्त किल श्रीवसुधां विधाय रम्भा चिरं भामतुलां नलस्य। तत्रानुरक्ता तमनाप्य भेजे तन्नामगन्धान्नलकूबरं सा॥ उत्तमोपभोगिनो भोगिप्रवृत्तिर्निन्दार्हेतुः। तथा च भर्तृहरिः। मत्तेभेन्द्रविभिन्नकुम्भकवलग्रासैकबद्धस्पृहः किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी। कमेर्लुङि कमेर्णिङिति स्वार्थे णिङि णिश्रीति चङि णेरनिटीति लोपे णौ चङ्युपधाया ह्रस्वे चङीति द्वित्वम्। सन्वल्लघुनीति सन्वद्भावे सन्यत इतीत्वेऽभ्यासस्य दीर्घो लघोरिति दीर्घः। अद्। भूमौ यां स्वयंवरमतानेकदेवगन्धर्वसहस्रेषु। षष्ठी चानादर इति चकारादनादरे सप्तमी। तामनादृत्य

मलयानिल! सुरतसमुत्कण्ठादीक्षागुरो! वह यथेच्छमपगता मम प्राणा इति बहुविधं भाषमाणा सखीजनेन समं मुमूर्च्छ। अनन्तरं परिजनप्रयत्नोच्छ्वसितजीविता सखी क्षणमतिशिशिरघनसाररसनिम्नगाकूलपुलिने क्षणमतितुहिनमलयजरससरित्परिसरे क्षणमरविन्दकाननपरिवारितमरकतविटपिच्छायासु क्षणमनिलोल्लासितदलेषु कदलीकाननेषु क्षणं कुसुमशय्यासु क्षणं नलिनीदलसंस्तरेषु प्रलयकालोदितद्वादशरविकिरणकलापतीव्रवि-

---

धर्मराजं पितृपतिं विफलमेवाचकाङ्क्षत् कावि वाचि मानि काङ्क्षायाम्। लुङ्। इति बहुविधं चिन्तयन्ती। विरहमुर्मुरेत्यादिनाष्टमीमवस्थां वर्णयति। विरहतुषानलमधिरूढेव। मुर्मुरस्तु तुषानल इति वैजयन्ती। वाडवाग्निर्वडवानलस्तच्छिखा ज्वाला तया कवलितेव। वाडवो वडवानलः। वह्नं वयोज्वालकीलावित्यमरः। कालाग्निर्यो रुद्रपावकः शिवालिङ्गनेवजन्मा तेन ग्रस्तेव। इति विरहदाहमभिव्यज्य वर्णयति। पातालगुहायां प्रविष्टेव। शून्यकरणग्रामं शून्येन्द्रियवर्गं हृदयं तव लिखितमिव। अन्तरात्मानमधिष्ठितमिवान्तरात्मनि स्थितम्। अधिशीङ्स्थासां कर्मेति कर्मसञ्ज्ञा। पललं मांसं तव विभक्तमिव। सप्तमीमवस्थां दर्शयति। उन्मत्तेव। अष्टमीमवस्थां व्याधिमाह। बधिरेव मूकेव। नवमीमवस्थां जड़तामाह। शून्यं वेत्यादि। मदनव्याधिनिराकरणार्थं शिशिरोपचारं वर्णयन् पुनरष्टम्यवस्थां सूचयति। प्रियसख्यनङ्गलेखे! अनङ्गस्य लेखा यस्यां सा। ईषदुद्गतमन्मथे! विरहवेदनानभिज्ञतया शिक्षणं तदुपचारेषु। हृदये पाणिपद्मं वितर देहि। दुःसहो विरहसन्तापः। मुग्धेऽनभिज्ञे मदनमञ्जरि! चन्दनोदकेन सिञ्च। सरले! मन्मथविकारानभिज्ञे! वसन्तसेने! केशपाशं केशकलापं संहर। पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे। इत्यमरः। तरले! चञ्चलचित्ते! तरङ्गवति! केतकीधूलिं केतकीपरागं विकिर। वामे! विपरीतक्रियाकारिणि! मदनमालिनि! नलिनीदलेन वीजय। चपले! चित्रलेखे! चित्रे! चित्तचौरं जनं लिख। भाविनि! भावाभिज्ञे! मुक्ताचूर्णनिकरं निक्षिप। रागिणि! रागवति! नलिनीदलसमूहेन पयोधरभारं स्थगयाच्छादय। कान्ते! कान्तिमति! मन्दं वाष्पविन्दूनपनय। विन्दूनिति बहुवचनं पीड़ाबहुत्वसूचकम्। तथा च भरतः। वाष्पो नामाश्रुणः पूर्णमसौ सञ्जायते त्रिधा। निमित्तवयसम्बन्धादानन्दर्षार्त्ति-

रहाग्निदह्यमानामतिकृशां विप्राणामिव तनुं बिभ्रती प्रचलदमन्दमन्दरान्दोलितदुग्धसिन्धुतरलतरङ्गच्छटाधवलहासच्छुरिताधरपल्लवं तन्मुखारविन्दं द्विजकुलमिव श्रुतिप्रणयि तदीक्षणयुगलं सहजसुरभिमुखपरिमलमाघ्रातुकामेव सुदूरविनिर्गता सा नासावंशालक्ष्मीः कलङ्कमुक्तेन्दुकलाकोमला पीयूषफेनपटलपाण्डुरा सा द्विजपङ्क्तिस्तददृष्टचरमनङ्गमतिशयानं रूपं धन्यानि तानि स्थानानि ते च जनपदाः पुण्यानि नामाक्षराणि च तानि सुकृतभाञ्जि यान्यमुना परिष्कृतानीति मुहुर्मुहुः परिभावयन्ती दिक्षु

---

सम्भवः ॥ आनन्दे विलुठन् भवतीर्ष्यायां सतरङ्गितायामः। आत्तीवजन्मातिकलवद्बहलबिन्दुसन्दर्भः। इति। सम्प्रत्यस्यामुन्मादं वर्णयति। व्यभिचारी चोन्मादः। अत्र विभावः प्रियवियोगविभवभ्रंशादयः। अनुभावो वृथालपितवृथारोदनादयः। भगवति ! सर्वैश्वर्ययुते। प्रसन्नेयं तं पुनर्दृष्टिगोचरं करिष्यतीति स्तुतिः। निद्रे मामनुगृहाण। पूर्वं तत्सम्भवाद्यया सुखमनभूतमेव पुनरपि मत्वानभवं यथा करवै तथा रचयेत्यनुग्रह इत्यर्थः। अपरैरिन्द्रियैः किं तद्दर्शनेनानपयुक्तत्वादुत्प्रेक्षा। क्वत्वेत्यस्य गम्यमानत्वात् तृतीया। गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका। विधसा लोचनमयान्येव ममाङ्गानि न कृतानीति तं धिक्। उभसर्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु। द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥ इति शेषे तमित्यत्र द्वितीया। भगवन् ! कुसुमायुधायमञ्जलिनमस्कारो भावत्यभिप्रायाभिज्ञे तादृशे जनेऽनुचरो भव। तस्य सेवको भवेत्यर्थः। यथा मां पीडयसि तथा तमपि पीडयेति त्वतिवात्सल्यादयोग्यत्वाच्च नाभ्यधायि। सम्बन्धं विना गुणाविष्काराभावेनाल्परूपत्वेन हीनत्वादनुचरत्वोक्तिः। मलयानिल ! समुत्कण्ठादीक्षागुरो ! यथेष्टं वह। यथेष्टवहनात् सोऽप्युत्कण्ठितो भविष्यतीत्यभिप्रायात् प्रार्थना। प्रार्थनायां लोट्। मे प्राणा अपगताः वर्त्तमाने क्तः। पुंसि भूम्न्यसवः प्राणा इत्यमरः। अनन्तरं परिजनप्रयत्नेनोच्छ्वसितं जीवितं यस्यास्तादृशी सत्यतिशिशिरघनसाररसनिम्नगाकूलपुलिनेष्वतिशीतलकर्पूरजलनदीतीरे पुलिनेषु। क्षणमतितुहिनमलयजरससरित्पयिसरेष्वतिशीतचन्दनजलनदीषु। क्षणमरविन्दकाननपरिवारितं यत् सरस्तस्य तटविटपिच्छायासु। क्षणमनिलोद्भ्रामितानि दलानि येषां तादृशेषु कदलीकाननेषु। क्षणं कुसुमशय्यासु। क्षणं नलिनीदलसंस्तरेषु नलिनीदलास्तरेषु। प्रलयकालोदितद्वादशरवीणां किरणकलापवत् तीव्रो यो विरहानलस्तेन दह्यमानामतएवातिकृशां

विदिक्षु लिखितमिव नभस्युत्कीर्णमिव विलोचने प्रतिबिम्बितमिव चित्रफलके लिखित्वा पुरोदर्शितमिवेतस्ततो विलोकयन्ती व्यतिष्ठत । अथ तस्याः सारिका तमालिका नाम तत्सखीभिः सहालोच्य कन्दर्पकेतोर्भाव माकलयितुं प्रस्थितागता च मयैव सार्धमत्रैव तरोरधस्तात् तिष्ठतीत्युक्त्वा विरराम । अथ मकरन्दः सहर्षमुत्थाय तमालिकां विदितवृत्तान्तामकरोत् सा च कृतप्रणामा मकरन्दाय पत्रिकामुपानयत । अथ स तां स्वयमेवावाचयत् ।

प्रत्यक्षदृष्टभावाप्यस्थिरहृदया हि कामिनी भवति ।
स्वप्नानुभूतभावा दृढयति न प्रत्ययं युवतिः ॥

तच्छ्रुत्वा कन्दर्पकेतुरमृतार्णवमग्नइव सर्वानन्दानामुपरि-

---

विप्राणां तनुमिव बिभ्रती । अर्थात् तनुमिति । मुहुर्मुहुः परिभावयन्ती दिक्षु लिखितमिवेत्यादीतस्ततो विलोकयन्ती व्यतिष्ठतेत्यन्वयः । गुणकीर्त्तनरूपां चतुर्थीं दशां प्रचलदित्यादिना वर्णयति । प्रचलदमन्दो मन्दरस्तदान्दोलितः कम्पितो दुग्धसिन्धुस्तस्य तरलतरङ्गच्छटावत्स्वच्छो हासो हास्यं तेन स्फुरितमधरपल्लवं यस्य तादृशं तन्मुखारविन्दं कन्दर्पकेतुमुखकमलम् । द्विजकुलमिव ब्राह्मणसमूहमिव वंशमिव वा श्रुतिर्वेदः कर्णश्च तत्र प्रणयि प्रश्रयवत् तदीक्षणयुगलम् । सहजेति कलङ्कमुक्तेति स्पष्टम् । अनङ्गमतिशयानं तदनिर्वचनीयं रूपमदृष्टचरम् । भूतपूर्वे चरट् । धन्यानि तानि स्थानानि ते च जनपदा यत्र स वसतीति शेषः । तानि नामाक्षराण्यभिधानवर्णानि सुकृतभाञ्जि पुण्यानि यान्यमुना परिष्कृतान्यलङ्कृतानीति परिभावयन्ती चिन्तयन्ती दिक्षु विदिक्षु लिखितमिव नभस्याकाश उत्कीर्णमिव विकीर्णमिव विलोचने प्रतिबिम्बितमिव । चित्रफलके लिखित्वा पुरो दर्शितमिवेतस्ततो विलोकयन्ती । अननुभूतमपि सङ्कल्पेनावलोक्यते । तदुक्तम् । कामक्रोधभयोन्मादाच्चौरसर्पाद्युपद्रवात् । असत्यान्यपि पश्यन्ति पुरतोऽवस्थितानिव ॥ इति । व्यतिष्ठत । समवप्रविभ्यः स्थ इति तङ् । पत्रहारिणी दूतीयम् । कामिन्याः कामिनश्चापि सन्देशार्थां तु पत्रिकाम् । प्रापयत्यचिरेणैतामाहुः पत्रस्य हारिकाम् ॥ इति । अथ तस्याः सारिका तमालिका । नामेति प्रसिद्धौ । तत्सखीभिः सहालोच्य कन्दर्प-

वर्त्तमानो मन्दमुत्थाय प्रसारितबाहुयुगलस्तमालिकामालिलिङ्ग। अथ तयैव सार्धं किं करोति किं वदति कथमास्त इत्यादि सकलं वासवदत्तावृत्तान्तं पृच्छंस्तत्र तां निशां दिवसमप्यतिवाह्य कन्दर्पकेतुश्चचाल। अत्रान्तरे भगवानपि मरीचिमाली तं वृत्तान्तमिव कथयितुं मध्यमलोकमवततार। अथ वासरताम्रचूड़चूड़ाचक्राकारश्चक्रवाकचक्रसङ्क्रामितसन्तापतयेव मन्दिमानमुद्वहन् मन्दारस्तबकसुन्दरः सिन्दूराहतसुरराजकुम्भिकुम्भविभ्रमं बिभ्राणस्ताण्डवचण्डवेगोच्छलितधूर्जटिजटाजूटकूटबन्धबन्धुरविकटवासुकिभोगमणिताटङ्कसनाभिमण्डलः सन्ध्यासन्धिनो सरसयावकपटलचारुवारुणीवारविलासिन्यरुणमणिकुण्डलकान्तिः कालकरवालकृत्तवासरमहिषस्कन्धचक्राकारो मधुपूर्णं कपालपात्रमिव कालकपालिनोऽम्लानकुसुमस्तवक इव

---

केतोर्भावं वासवदत्तानुरागमाकलयितुं प्रस्थिता मयैव सार्धं सह्यागता चावैव तरोरधस्तात् तिष्ठतीत्युक्त्वा विरराम। अथ शुकवाक्यश्रवणोत्तरं मकरन्दः सहर्षमुत्थाय तमालिकां विदितो वृत्तान्तो यस्यास्तादृशीमकरोत्। सा च तमालिकापि कृतप्रणामा सती मकरन्दाय पत्रिकामुपानयत्। अथ स मकरन्दस्तां पत्रिकां मयि सत्ये तावन्मात्रमपि प्रयामोऽस्य माभूदित्यभिप्रायात् स्वयमेवावाचयत्। आर्य्ययाह। प्रत्यक्षं दृष्टो भावः पुरुषाभिप्रायोऽनया तादृश्यपि कामिनी हि यतोऽस्थिरहृदया· मय्यनुरक्त एवासावित्यनिश्चलचित्ता भवति। स्वप्नानुभूतभावा युवतिः प्रत्ययं स्वप्नदृष्टं स्वानुरक्तत्वनिश्चयं न द्रढयति। न दृढीकरोतीत्यर्थः। प्रत्यक्षदृष्टे यत्रानिश्चयस्तत्र परोक्षे का वार्त्तेति भावः। काव्यार्थापत्तिरलङ्कारः। कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते। इति। आर्य्या छन्दः। लक्ष्मैतत् सप्त गणा गोपेता भवति नेह विषमे जः। षष्ठोऽयं न लघू वा प्रथमेऽर्धे नियतमार्य्यायाः॥ षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयति पदनियमः। चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः॥ इति लक्षणात्। तच्छ्रुत्वेति स्पष्टम्। अथ तयैवेत्यपि स्पष्टम्। अत्रान्तरे भगवान् मरीचिमाल्यपि वृत्तान्तं वासवदत्तावृत्तान्तं कथयितुमिव मध्यमलोकं भूलोकमवततार। अथ चरमाणं वपयसि ममज्जेति सम्बन्धः। वासरमिव ताम्रचूडस्तस्य चूडाचक्राकारः। चक्रवाकानां चक्रं समूहस्तत्र सङ्क्रामितः

नभःश्रियो गगनाशोकतरुस्तबक इव कनकमयदर्पण इव प्रतीचीविलासिन्या भगवान् दिनमणिश्चरमार्णवपयसि तरलतरङ्गवेगोच्छलितविद्रुमविटपाकृतिर्ममज्ज। क्रमेण च रजोविलुठितोत्थितकुलायार्थिपरस्परकलहविकलकलविङ्ककुलकलकलवाचालशिखरेषु शिखरिषु वसतिकाङ्क्षेषु ध्वाङ्क्षेष्वनवरतदह्यमानकालागुरुधूपपरिमलोद्गारेषु वासागारेषु दूर्वाञ्चिततटिनीतटनिविष्टविदग्धजनप्रस्तूयमानकाव्यकथाश्रवणोत्सुकशिशुजनकलकलनिवारणक्रुद्धेषु वृद्धेष्वालोलिकातरलरसनाभिः कथितकथाभिर्जरतीभिरतिलघुकरतालजनितसुखे शिशयिषमाणे शिशुजने

---

सन्तापो येन तद्भावतयेव मन्दिमानमल्पतेजस्त्वमुद्वहन् मन्दारस्तबकसुन्दरः सिन्दूरेणाहतोऽभिभूतश्छादितो यः सुरराजकुम्भिकुम्भस्तद्विभ्रमं तदाकारत्वादस्य कत्वान्नास्तीति विशिष्टभ्रमं विलासं च बिभ्राणः। पूर्वत्रार्थेऽन्तर्भावितण्यर्थोऽव भ्रञ्। द्विपायिगुर्पस्तुतिकुम्भिसोमजा इति हारावली। ताण्डव चण्डवेगेनोच्छलितेन जटाजूटकूटबन्धेन बन्धुर उन्नतानतोऽत एव विषमविन्यासो यो वासुकिस्तस्य भोगमणिः फणामणिः स एव ताटङ्कः स्त्रीणां कर्णभूषणं तत्सनाभिस्तत्तुल्यरूपो मण्डलो यस्य सः। वर्तुलत्वार्थं ताटङ्करूपकम्। बन्धुरं तून्नतानतमित्यमरः। सन्ध्यैव सन्धिन्यकालदुग्धा वृषाक्रान्ता या गौस्तस्याः सरसयावकपटवच्चारुः। पीनायाश्चातिदुग्धाया गोः शृङ्गाराय मानवाः। रञ्जयन्ति शिरोदेशमन्यच्च बहुधा किल॥ क्वचिद्यावकपटलेति पाठः। अस्मिन् पाठे यावकपटलशब्देन यावकपटलमिव यावकपटलं लोकप्रसिद्धमेहदीतिपत्रविशेषं रञ्जनतिलकं विवचितम्। सन्धिनी तु वृषाक्रान्तकालदुग्धगवोः स्मृताः। इति विश्वप्रकाशः। सन्ध्यापुरन्ध्रीति पाठः सुगमः। वारुण्येव वारविलासिनी तस्या अरुणमणिकुण्डलवत् कान्तिरस्य सः। कालकरवालेन कृत्तश्छिन्नो वासरमहिषस्कन्धस्तच्चक्राकारः। करवालः कृपाणवदित्यमरः। कालकपालिनो मधुपूर्णकपालपात्रमिव। नभःश्रियोऽम्लानकुसुमस्तबक इव। तत्क्रीडनार्थेति भावः। गगनमेवाशोकतरुस्तस्य स्तबक इव। प्रतीचीविलासिन्याः कनकमयदर्पण इव। दिनमणिर्भगवांश्चरमार्णवपयसि ममज्ज। क्रमेण भगवती सन्ध्या समदृश्यतेत्यन्वयः। पूर्वं रजोविलुठितानि पश्चादुत्थितानि कुलायार्थीन्यत एव परस्परकलहविकलानि कलविङ्ककुलानि तेषां कलकलेन वाचालानि शिखराण्यग्राणि येषां

विरचितकन्दर्पमुद्रासु क्षुद्रासु कामुकजनानुबध्यमानदासीजनवि-
विधाश्लीलवचनश्रुतिविरसीकृतसन्ध्यावन्दनोपविष्टेषु शिष्टेषु रोमन्थ-
मन्थरकुरङ्ग-कुटुम्बकाध्यास्यमानमदिष्ठगौष्ठीनपृष्ठास्वरण्यस्थलीषु
निद्रालुद्रोणकुलकलितकुलायेषु काननिकायेषु कापेयविकलक-
पिकुलेष्वाश्रमतरुषु निर्जिगमिषति जरत्तरुकोटरकुटीरकुटुम्बिनि
कौशिककुले तिमिरतर्जननिर्गतासु दहनप्रविष्टदिनकरकरशिखा-
स्विव प्रस्फुरन्तीषु दीपलेखासु मुखरितधनुषि वर्षति शरनिकर-
मनवरतमशेषसंसारशेमुषीमुषि मकरध्वजे सुरतारम्भाकल्पशोभिनि
शम्भलीभाषितभाजि भजति भूषां भुजिष्याजने सैरन्ध्रीबध्यमान-
रसनाकलापजल्पाकजघनस्थलीषु जनीषु विश्रान्तकथानुबन्धतया

---

तादृशेषु शिखरिषु वृक्षेषु सत्सु । कलविङ्कश्चित्रपृष्ठो गृहनीडो वृषायणः । इति हारावली । शिरोऽयं शिखरं वा नेति तरुप्रकरणेऽमरः । वसतेर्निवासस्थानस्य काङ्क्षा येषां तादृशेषु ध्वाङ्क्षेषु काकेषु । अनवरतेति स्पष्टम् । दूर्वाभिरञ्चितं यत् तटिनीतटं तत्र निविष्ट-विदग्धजनैः प्रस्तूयमानानां काव्यकथानां श्रवणोत्सुका अतएव शिशुजनकलकलनिवा-रणार्थं कृतादरा तादृशेषु वृद्धेषु । आलोलिकायां बालानां निद्रार्थं क्रियमाणे हरलोल इति लोकप्रसिद्धे मुखध्वनिविशेषे तरला रसना जिह्वा यासां ताभिः कथितकथाभिर्जरतीभिर-तिलघुकरतालजनितसुखं शिशयिषमाणे शयितुमिच्छौ शिशुजने । तदुक्तम् । आलोलिका मुकुलिका चलुङ्गिर्मुखघटिका । इति । विरचिता कन्दर्पमुद्रा प्रसाधनं याभिस्तासु क्षुद्रासु वेश्यासु । क्षुद्रा वेश्यानटीकण्टकारिकासरघासु च । इति विश्वप्रकाशः । कामुकेति स्पष्टम् । रोमन्थेन चर्वितस्याकृष्य पुनश्चर्वणेन मन्थरेण कुरङ्गकुटुम्बकेनाध्यास्यमानं मदिष्ठं मृदुतरं गौष्ठीनानां भूतपूर्वगोस्थानानां पृष्ठं पृष्ठवत् पृष्ठं यासु तादृशीष्वरण्य-स्थलीषु सतीषु । गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकम् । इत्यमरः । निद्रालुद्रो-णकुलं काककुलं तेन कलितकुलायेषु व्याप्तनीडेषु काननिकायेषु काननसमूहेषु । निकायस्तु पुमान् लक्ष्ये सधर्मिप्राणिसंहतौ । इति विश्वप्रकाशः । कापेयं कपिकर्म तेन विकलानि कपिकुलानि येषु तेष्वाश्रमतरुषु । कपिज्ञात्योर्ढक् । जरत्तरूणां चिरन्तनवृक्षाणां कोटरा निष्कुहा त एव कुटीराणि तेषु कुटुम्बिनि कुटुम्बवति कौशिककुले निर्जिगमिषति

प्रवर्त्तमानानेकजनगृहगमनत्वरेषु चत्वरेषु समावासितकुक्कुटेषु निष्कुटेषु कृतयष्टिसमारोहणेषु बर्हिणेषु विहितसन्ध्यासमयव्यवस्थेषु गृहस्थेषु सङ्कोचोदञ्चदवाञ्चत्केसरकोटिमङ्कटकुशेशयकोशकोटरकुटीरशायिनि षट्चरणचक्रेऽथानेन वर्त्मना भगवता भानुमता समागन्तव्यमिति सर्वपद्ममयैर्वसनैरिव मणिकुट्टिमालिरिव विरचिता वरुणेन कालकृत्तस्य दिवसमहिषस्य रुधिरधारेव विद्रुमलतेवाम्बरमहार्णवस्य रक्तकमलिनीव गगनतडागस्य काञ्चनसेतुरिव कन्दर्पगमनस्य मञ्जिष्ठारागारुणपताकेव गगनहर्म्यतलस्य लक्ष्मीरिव स्वयंवरपरिगृहीतपीताम्बरा भिक्षुकीव तारानुरक्ता रक्ताम्बरधारिणी भगवती सन्ध्या समदृश्यत। क्षणेन

---

निर्गच्छति। निष्कुह: कोटरं वा नेत्यमर:। वास: कुटीति च। कुटीशमीशुण्डाभ्यो र इत्यल्पत्वे र:। तिमिरतर्जनार्थं निर्गतास्विव दहनप्रविष्टदिनकरकराणां किरणानां शिखासु प्रस्फुरन्तीषु दीपलेखासु। सौरं तेज: सायमग्निं सङ्क्रमते। आदित्य: सायमग्निं प्रविशतीत्यादिश्रुति:। मुखरितधनुषि। समासान्तविधेरनित्यत्वान्नानङ्। शरनिकरं वर्षति। अनवरतमशेषसंसारशेमुषीमुषि सकलसंसारमतिहारके मकरध्वजे। धी: प्रज्ञा शेमुषी मतिरित्यमर:। सुरतारम्भस्याकल्पेन वेषेण शोभिनि शम्भलीनां कुट्टनीनां भाषितं वचनं भजति तादृशि भूषां भजति भुजिष्याजने प्रेष्याजने। आकल्पवेषौ नेपथ्यम्। शम्भली कुट्टनी समे। नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारका:। इति विश्वमर:। भुजिष्या प्रैष्यभावे स्यात् स्वतन्त्रायामपि स्मृता। इति धरणि:। सैरन्ध्रीभिर्बध्यमानरसनाकलापेन काञ्चीकलापेन जल्पाकजघनस्थलीषु जनीषु वधूषु। सैरिन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका। स्याज्जल्पाकस्तु वाचाल इति द्वयोरमर:। जनी सीमन्तिनीवध्वोरुत्पत्तौ च जनिर्मता। इति विश्व:। विश्रान्तकथानुबन्धतया प्रवर्तमानानेकजनेषु गृहगमनत्वरायेषु तेषु चत्वरेष्वङ्गणेषु। अङ्गणं चत्वराजिरे इत्यमर:। निष्कुटेषु गृहारामेषु समावासितकुक्कुटेषु। गृहारामास्तु निष्कुटा इत्यमर:। बर्हिणेषु मयूरेषु कृतयष्टिसमारोहणेषु। मयूरो बर्हिणो बर्हीत्यमर:। गृहस्थेषु विहितसन्ध्यासमयव्यवस्थेषु। सङ्कोचेति स्पष्टम्। अथानन्तरं वरुणेनानेन वर्त्मना भानुमता गन्तव्यमिति सर्वपद्ममयैर्वसनैर्मणिकुट्टिमालिर्मणिबद्धभूमिरिव रचिता। कुट्टिमोऽस्त्री निबद्धा भूरित्यमर:। कालकृत्तेत्यादि स्पष्टम्।

च क्षणदारागरचनाचतुरासु सन्ध्याशिष्यास्विव वेश्यासु तुलाधारशून्यायां पण्यवीथ्यामिव दिवि घनघटमानदलपुटासु पुटकिनीषु तिमिरप्रतिहस्तकेष्विव तत इतः परिभ्रमत्सु कमलसरसि मधुकरेषु विकलकुररीकृतकूलेन रविविरहविधुरासु विलपन्तीष्विव सरोजिनीषु गणक इव नक्षत्रसूचके प्रदोषे हरकण्ठकाण्डकालिमसनाभि दैत्यबलमिव प्रकृष्टतारकं भारतसमरमिव वर्धमानोलूककलकलं धृष्टद्युम्नवीर्यमिव कुण्ठित-

---

लक्ष्मीरिव स्वयंवरपरिगृहीतः पीताम्बरो विष्णुर्यया। पक्षे। पीताम्बरं पीतनभः। भिक्षुकीव ताराणां दैवतानामनुरक्ता रक्ताम्बरधारिणी रक्तवस्त्रधरा। पक्षे। तारा नक्षत्राण्यनुरक्ता यस्याम्। आहिताग्न्यादिः। रक्तमम्बरमाकाशो यस्याम्। क्षणेन गणक इव नक्षत्रसूचके प्रदोषे तिमिरमजृम्भतेत्यन्वयः। क्षणदा रात्रिस्तस्या रागरचना तत्र चतुरासु सन्ध्याशिष्यास्विव वेश्यासु। पक्षे। क्षणदा आ साकल्येन रागा भैरवादयस्तेषां रचना यथायथं स्वरग्राममूर्छनासहितं गानं तत्र चतुरासु। यद्वा। क्षणदानां स्वसुखप्रदानामा साकल्येन रागरचना प्रीतिरचना तत्र चतुरासु। तुलाधारा वणिजस्तैः शून्यायां पण्यवीथ्यामिव दिवि। पक्षे। तुलाराशिराधारो येषां ते चन्द्रादयस्तैः शून्यायाम्। तथाच माघः। अविभाव्यतारकमदृष्टहिमद्युतिबिम्बमस्तमितभानु नभः। विगतोरुतापमतमिस्रमभादपदोषतेव विगुणस्य गुणः॥ इति। तुलाधारस्तुलाराशौ भवेद्वाणिजकेऽपि च। इति विश्वः। घनं निविडं घटमानदलपुटासु पुटकिनीषु कमलिनीषु। राजादेर्योग्यस्थापदि विपणिनो विपणमपसारयन्ति सम्यीकाय स्वद्वारपिधानमाचरन्तीति लोकव्यवहारो ध्वनितः। हरताल इति भाषायाम्। नालीकिनी पुटकिनी बिसनालिन्यथ पद्मिनी। इत्युत्पलिनी। कमलसरसि तिमिरप्रतिहस्तकेष्विवेतस्ततो भ्रमरेषु परिभ्रमत्सु। प्रतिहस्तकोऽपरहस्तकः। संज्ञायां कन्। गुमास्ता इति भाषायाम्। मालिन्येन साम्यात् प्रतिहस्ततोत्प्रेक्षणम्। प्रभौ पराभूते क्षुद्रः परहस्तदारादीन् समग्रा सम्भ्रमयान् लक्ष्मीजिघृक्षया प्रेषयन्त्येवेति लोकप्रसिद्धो ध्वनितः। रविविरहविधुरास्वत एव विकलकुररीकृतकूलेन पक्षिविशेषशब्दमिषेण विलपन्तीष्विव सरोजिनीषु। गणक इव दैवज्ञ इव नक्षत्रसूचके शुभाशुभकार्योपयोग्यश्विन्यादिनक्षत्रसूचके। पक्षे। नक्षत्राणि तारास्तत्सूचके द्योतके प्रदोषे। दैवज्ञगणकावपीत्यमरः। हरस्य कण्ठकाण्डं गलस्तम्भस्तत्कालिमसनाभि

द्रोणप्रभावं नन्दनवनमिव सञ्चरत्कौशिकं कृष्णवर्त्मेवाखिल-काष्ठापहारकं सगर्भमिव घनतरपाषाणकर्करासु गिरितटीषु सचक्षुरिव सुप्तसिंहनयनदीधितिच्छटाकपिलेषु सानुषु सजीव-मिव तमोमणिभिः संवर्धितमिवाग्निहोत्रधूमलेखाभिर्मांसलित-मिव कामिनीकेशपाशसंस्कारागुरुधूमपटलैरुद्दीपितमिव घनतर-लीनमधुकरपटलमेचकितपेचकिकपोलतलदानधाराशीकरैः पुञ्जी-कृतमिव विततमालमालाच्छायासु लीयमानमिव कज्जलश्याम-भोगिषु प्रावरणमिव रजनीपांसुलायाः पलितौषधमिव वृद्धवार-विलासिन्या अपत्यमिव रजन्याः सुहृदिव कलिकालस्य मित्र-मिव दुर्जनहृदयस्य बौद्धदर्शनमिव प्रत्यक्षद्रव्यमपह्नुवानं तिमिरं

---

दैत्यवल्लमिव प्रकृष्टः शेठम्नारको दैत्यविशेषो यत्र । काण्डं चावसरे वाणे नाले स्कन्धे च शाखिनाम् । स्त्रे रहसि गर्ते चेति धरणिः । पक्षे । प्रकृष्टान्तरका भासादिनक्षत्राणि यत्र । तथाच माघः । सवितुस्त्रिपाङ्गि दद्दगेऽपि न यः स तमो तमोभिरधिगम्य तताम् द्युतिमयहीन्द्रहगणो लघवः प्रकटीभवन्ति मलिनाश्रयतः ॥ भारतसमरमिव वर्धमान उलूकस्य कुरुशोधविशेषशकुनिपुत्रस्य कलकलो यत्र । पक्षे । उलूकाः पेचकाः । उलूकः कुरुभेदेऽपि पेचके जम्भभेदिनि । इति विश्वः । सङ्ग्रामे प्रयोजनयोद्धृभ्य इत्यण् । धृष्टद्यु-म्नवीर्यमिव द्रुपदपुत्रवीर्यमिव कुण्ठितो द्रोणस्याचार्यस्य प्रभावो येन । पक्षे । कुण्ठितो द्रोणानां काकानां प्रभावो यत्र । द्रोणो ना दग्धकाके स्यादश्वत्थाम्नो गुरावपि । इति रुद्रः । नन्दनवनमिवेन्द्रवनमिव सञ्चरन् कौशिक इन्द्रो यत्र । पक्षे । कौशिका उलूकाः । कौशिकः पेचके शक्रे विश्वामित्रे च कौशिकः । इति विश्वः । कृष्णवर्त्मेवाखिलकाष्ठा-नामिन्धनानामपहारकम् । पक्षे । काष्ठा दिशस्तासामपहारकमाच्छादकम् । यद्वा । कृष्णवर्त्मानमिव दुराचारमिवाखिलकाष्ठानामखिलोत्कर्षाणामपहारकं नाशकम् । कृष्ण-वर्त्मा हुताशे स्याद्दुराचारे विधुन्तुदे । काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः । स्याद्दिशि स्थानमात्रे च काष्ठमाख्यातमिन्धने । इति विश्वप्रकाशः । सगर्भमिव ससत्त्वमिव । अधि-कमिति यावत् । क्वचित् सगर्वमित्यपि पाठः । घनतराः पाषाणाः कर्कराश्च यत्र तासु गिरितटीषु । कांकर इति भाषायाम् । सचक्षुरिव सिंहनेत्रदीधितिच्छटाकपिलेषु सानुषु । सुप्तसिंहेति पाठस्तु ग्राम्यकत्वादुपेक्षितः । तमोमणिभिर्ज्योतिरिङ्गणैः सजीवमिव ।

व्यजृम्भत। मुदितमिवातिमत्तमातङ्गमनोहरगण्डमण्डले फलितमिवातिसान्द्रबहलच्छदविततमालतमालकानने स्फुरितमिवातिकान्तकान्ताजनघनतरकेशपाशसंहतौ मिलितमिवेन्द्रनीलमणिरश्मिभिरतिशयमांसलं तम इवावटतटाटवीषु साटोपमिव स्फुटपाटवोत्कटप्रकटविशङ्कटकुटजविटपोत्कटविनटितषट्पदालिषु घनतरघोरघस्मरविषधरभोगभासुरं मदभरमत्तदन्तिदन्तद्युतितर्जनजर्जरं तमः। निशाकरारम्भसमय इव सङ्कुचत्कुवलयव्याजेन विरचिताञ्जलिपुटे नतिमति तमोतिमिरे क्षणेन च सन्ध्याताण्डवाडम्बरोच्छलितमहानटजटाजूटकूटकुटिलविवर-विवर्त्तित-

---

इतस्ततो भ्रमणादिति भावः। ध्वान्तोन्मेषस्तथोतस्तमोमणिर्ज्योतिरिङ्गणः। इति व्याडिः। अग्निहोत्रधूमलेखाभिः संवर्द्धितमिव। कामिनीकेशपाशसंस्कारार्थमगुरुधूमपटलानि तैर्मांसलो बलवांस्तद्वदाचरितमिव। सिध्मादित्वाल्लः। बलवान् मांसलोंऽसल इत्यमरः। घनतरं निविडतरं लीनानामुपविष्टानां मधुकराणां पटलैर्मेचकितानां श्यामवदाचरितानां पेचकिनां गजानां कपोलतलदानधाराशीकरैरुद्दीपितमिव। उलूके करिणः पुच्छमूलोपान्ते च पेचकः। कालश्यामलमेचका इति द्वयोरमरः। प्रौढोक्तिः। वितता या तमालमाला तच्छायासु पुञ्जीकृतमिव। कज्जलश्यामभोगिभोगेषु सर्पशरीरेषु लीयमानमिव। रजनीपांसुलाया रात्रौ कृष्णाभिसारिकायाः प्रावरणमिव। स्वैरिणी पांसुला च स्यादित्यमरः। हट्टवारविलासिन्याः पलितस्य जराकृतकेशशौक्ल्यस्यौषधं तन्निवारकमिव। अन्धतमसे केशानां विशेषानुपलम्भादिति भावः। पलितं वेश्यानां जीविकाभङ्गहेतुरिति ता एव वर्णिताः। पलितं जरसा शौक्ल्यं केशादावित्यमरः। रजन्या रात्रेरपत्यमिव। तत उद्भूतत्वादिति भावः। कलिकालस्य सुहृदिव। सदाचारनाशकत्वान्मालिन्याच्च साम्यात् सुहृत्त्वम्। दुर्जनहृदयस्य मित्रमिव। बौद्धदर्शनमिव बौद्धशास्त्रमिव प्रत्यक्षमपि चक्षुरिन्द्रियगोचरमपि न तु परमाण्वादिवदतीन्द्रियं द्रव्यमपह्नुवानम्। सर्वं ज्ञानमयं जगदिति मन्यमानास्ते। सूर्याचन्द्रमसौ व्योम ताराचक्रं वसुन्धरा। सरितः सागराः शैलाश्चित्तस्यैव विभूतयः॥ इति प्रत्यक्षपरिकल्पितमप्यर्थमन्यथयन्ति। अतिमत्तमातङ्गमनोहरगण्डमण्डले मुदितमिव हृष्टमिव। अतिसान्द्रबहलपत्रविततमालतमालकानने

जङ्गकन्यावारिधाराबिन्दव इव विकीर्णा दुर्धरधरणिभारभर-भुग्नभीमदिग्गजमातङ्गमण्डलकरपरिमुक्तशीकरच्छटा इवाति-दवीयोनभस्तलभ्रमणखिन्नदिनकरतुरगवान्तफेनस्तबका इव गगनमहासरःकुमुदकाननसन्देहदायिन्यो विश्वं गणयतो विधातुः शशिकठिनीखण्डेन तमोमषीश्यामेऽजिन इव नभसि संसार-स्यातिशून्यत्वाच्छून्यबिन्दव इव वितता जगत्त्रयविजयविनिर्गतस्य मकरकेतो रतिकरतलविकीर्णलाजा इव गुटिकास्त्रगुलिका इव पुष्पधन्वनो वियदम्बुराशिफेनस्तबका इव रतिविरचिता गगनाङ्गणे आतर्पणपञ्चाङ्गुलय इव विकीर्णा व्योम लक्ष्मीहारमुक्ता-

---

फलितमिव। अतिक्रान्तकान्ताजनघनतरकेशपाशसंहतौ स्फुरितमिव। इन्द्रनीलमणि-रश्मिभिर्मिलितमिव। अतिशयमांसलं तमः। अवटा गर्तास्तटा अटव्यश्च तवोत्पन्नमिव। अवटः स्यात् खलि गर्ते कूपे कुहकजीविनि। इति विश्वप्रकाशः। स्फुटं पाटवं पटुत्वं तेनोत्कटमुदग्रं प्रकटो व्यक्तो विशङ्कटो महान् यः कुटजविटपस्तेनोत्कटविनटितषट्पदा-लिषु साटोपमिव सावष्टम्भमिव। विकटः सुन्दरे प्रोक्तो विलासविकरालयोः। इति विश्वप्रकाशः। विशङ्कटं पृथुबृहदित्यमरः। घनतरं घोरं भयानकं घस्मरो भक्षको यो विषधरस्तद्भोगवद्भासुरम्। घोरं भीमं भयानकम् भक्षको घस्मरोऽद्मर इत्युभयत्रामरः। स्वच्छन्दः करच् घसेः। मदभरमत्तदन्ति दन्तद्युतितर्जनेन जर्जरं शिथिलावयवं तमः। मदमत्त इति विशेषणं गजानां तारुण्यद्योतनाय तच्च दन्तयोः श्वैत्याय। निशाकरारम्भ-समये चन्द्रोदयारम्भसमये सङ्कुचत्कुवलयव्याजेन विरचिताञ्जलिपुट इव। अतएव नतिमति नम्रे तमौतिमिरे सति। क्षणेन तारका व्यराजन्तेत्यन्वयः। पूर्वं तमःप्रारम्भे ता एव वर्णिता इदानीं चन्द्रोदयप्रारम्भ इति न किञ्चिदसमञ्जसम्। सन्ध्यासु ताण्डवं नृत्यं तस्या-डम्बरः समारम्भस्तेनोच्छलिते महानटस्य शम्भोर्जटाजूटकूटकुटिलविवरे विवर्तिता या गङ्गकन्या गङ्गा तस्या वारिधाराबिन्दव स्त इव विकीर्णा विसृताः। ताण्डवं नटनं नाट्यमित्यमरः। आडम्बरः समारम्भे गजगर्जिततूर्ययोः इति विश्वप्रकाशः। दुर्धरधर-णिभारभरभुग्नभीमदिग्गजमातङ्गमण्डलं समूहस्तत्करैः शुण्डाभिः परिमुक्ताः सीकरच्छटा अम्बुकणच्छटास्ता इव। करो वर्षोपले पाणौ शुण्डाप्रत्ययरश्मिषु। इति विश्वप्रकाशः। अतिदवीयो दूरं नभस्तलं तत्र भ्रमणेन खिन्ना दिनकरतुरगास्तैर्वान्तफेनस्तबका इव।

निकरा इव चन्द्रचिताचक्राद्वात्यावेगव्यस्ताः कामकीकसखण्डा इव तिमिरोद्गमधूमधूमलसन्ध्यानलपरितप्तगगनमहास्थलीकटाह-भज्ज्यमानलाजानुकारिण्य इव तारका व्यराजन्त। ताभिः श्वित्रितमिव वियदशोभत। दीर्घोच्छ्वासरचनाकुलं सुश्लेषवक्र-घटनापटु सत्कविवचनमिव चक्रवाकमिथुनमतीवाखिद्यत। कमलिनीवनसञ्चरणलग्नमकरन्दबिन्दु लुब्धमुग्धमधुकरमालापाश-वलयितं कालपाशेनेव मूर्त्तरामशापेनाकृष्यमाणं चक्रवाक-मिथुनं विजघटे। रविविरहविधुरायाः कमलिन्या हृदयमिव द्विधा पपाट चक्रवाकमिथुनम्। आगमिष्यतो हिमकरदयितस्य

---

दवीयश्च दविष्ठं च सुदूरं इत्यमरः। गगनमहासरसः कुमुदकाननसन्देहदायिन्यः। तुल्यत्वादित्यर्थः। विश्वं गणयतो विधातुस्तमोमषीश्यामेऽजिने चर्मणीव नभस्याकाशे शशी चन्द्र एवकठिनी खटिका तस्याः खण्डेन शकलेन रचिता इति शेषः। संसारस्या-नित्यत्वात्। नश्वरत्वे नेत्यर्थः। शून्यबिन्दव इव। कठिनी खठिकायां लिपि विश्व-प्रकाशः। जगत्त्रयविजयार्थं विनिर्गतस्य मकरकेतोः कामस्य रतेः प्रियायाः करतलवि-कीर्णलाजा इव। पुष्पधन्वनो गुटिकास्त्वं गुलेल इति भाषायाम्। तस्य गुलिका इव। गुरिया गोली इति वा द्वयं भाषायाम् वियदम्बुराशेः फेनस्तवका इव। गगनाङ्गणे रति-विनिर्मिता आतर्पणम्। अग्रिपन इति भाषायाम्। तस्य पञ्चाङ्गुलयः। चुटकी इति भाषायाम्। ता इव। उत्सवादावातर्पणेनाङ्गुली रञ्जयित्वा कुड्यादि रञ्जयन्तीति सम्प्रदायः। आतर्पणं च सौहित्ये विन्यासालिम्पनेऽपि च। इति विश्वप्रकाशः। विकीर्णा विक्षिप्ता व्योमलक्ष्म्याहारमुक्तानिकरा इव। चन्द्र इव चिताचक्रं तस्माद्वात्यावेगेन व्यस्ता इतस्तत उत्पतिताः कामकीकसखण्डाः कामास्थिखण्डास्त इव चिता चित्या चितिः स्त्रियाम्। कीकसं कुल्यमस्थि चेति द्वयोरमरः। तिमिरमेव धूमस्तेन धूमलः कृष्णलोहितः सन्ध्या-नलो वह्निस्तेन परितप्तो गगनमहास्थल्येव कटाहस्तत्र भज्ज्यमानलाजानुकारिण्यः। धूमधूमलौ कृष्णलोहित इत्यमरः। ताभिस्ताराभिः श्वित्रितं सञ्जातकुष्ठमिव वियदराजत। कोठो मण्डलकं कुष्ठं श्वित्र इत्यमरः चित्रितमिति पाठे सञ्जातचित्रम्। दीर्घोच्छ्वासो दीर्घपरिच्छेदस्तद्रचनयाकुलं व्याप्तम्। यद्वा। दीर्घोच्छ्वासरचनानां कुलं गृहम्। शोभनः श्लेषोऽलङ्कारो गुणविशेषो वा वक्रं छन्दोभेदस्तद्रचनापटुः सत्कविसत्काव्यमिव। पक्षे।

पार्श्वे सञ्चरन्ती कुमुदिन्या भ्रमरमाला दूतीवालक्ष्यत। तारकाव्याजादस्तङ्गतस्य दिवाकरस्य शोकादिव स्थूलाश्रुबिन्दुभिः ककुभो व्यरुदन्। भास्वतो निजदयितस्य विरहादभिनवकिञ्जल्कराजिव्याजेन मुर्मुर इव नलिनी कोशहृदये जज्वाल। रविरश्मिभस्मितनभोवनमषीराशिरिव श्रुतिवचनमिव परिहृतदिगम्बरदर्शनं सद्यो द्रावितराजपट्ट इव समुद्रप्रवाह इव शार्वरमन्धकारं व्यजृम्भत। क्षणेन च क्षणदाराजकन्यकाकन्दुकः कन्दर्पकनकदर्पण उदयगिरिबालमन्दारपुष्पस्तबकाकृतिः प्राचीललाटतटकुङ्कुमबिन्दुचक्राकारः कनककुण्डलमिव नभःश्रियः दिव्यवधूप्रसाधिकाहस्तस्रस्तालक्तकपटलमिव गगनसौधकनक-

---

दीर्घोच्छ्वासस्य महोच्छ्वसनस्य रचनयाकुलं व्याकुलम्। सुश्लेषवक्त्रघटना शोभनः श्लेष आलिङ्गनं यत्र तादृशी वक्त्रघटना मुखसंयोजनं तत्र पटु चक्रवाकमिथुनमतीवाखिद्यत। आख्यायिका परिच्छेद आश्वासोच्छ्वासकावपि। इत्युत्तरतन्त्रम्। कुलं जनपदे गृहे। सजातीयगणे गोत्रे देहेऽपि कथितं कुलम्। इति विश्वप्रकाशः। एकरूपेण वाक्येन द्वयोर्भणनमर्थयोः। तन्त्रेण यत्र शब्दज्ञैः श्लेष इत्यभिशब्दितः॥ इति भोजराजः। श्लिष्टमस्पृष्टशैथिल्यं इति गुणप्रकरणे दण्डी। वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम्। इति केदारः। पटुस्तीक्ष्णेऽस्फुटे दक्षे निष्ठुरे निर्दयेऽपि च। इति रुद्रः। कमलिनीवनसञ्चरणेऽलम्प मकरन्दबिन्दुषु लुब्धा सतृष्णा मुग्धा रम्या मधुकरमाला तया शबलं चित्रं गात्रं यस्य तत्। कालपाशेनेव मूर्तरामशापेन सम्यग्यया रात्री न मिलतस्तथाकृष्यमाणं चक्रवाकमिथुनं विजघटे विघटितम्। रविविरहविधुरायाः कमलिन्या हृदयमिव चक्रवाकमिथुनं द्विधा पपाट। पट पट गतौ। कुमुदिन्याः पार्श्वे सञ्चरन्ती भ्रमरमालागमिष्यतो हिमकरदयितस्य चन्द्रप्रियस्य दूतीवालक्ष्यत। सञ्चरन्तीत्यत्र तृतीयान्तेन योगाभावात् समस्तृतीयायुक्तादिति नात्मनेपदम्। अस्तङ्गतस्य दिवाकरस्य शोकात् ककुभस्तारव्याजेन व्यरुदन्। कमलिनी कोशहृदये भास्वतो निजदयितस्य विरहादभिनवकिञ्जल्कराजिव्याजेन मुर्मुर इव तुषानल इव जज्वाल। मुर्मुरस्तु तुषानल इति वैजयन्ती। रविरश्मिभस्मितनभोवनस्य मषीराशिरिव। श्रुतिवचनमिव वेदवाक्यमिव परिहृतं दिगम्बरस्य बौद्धस्य दर्शनं शास्त्रं येन तत्। पक्षे। दिगम्बरयो दिगाकाशयोर्दर्शनं येन तत्।

कुम्भ इव प्रस्थानकनककलश इव त्रिभुवनविजयविनिर्गतस्य मकरकेतोः कन्दर्पकार्त्तस्वरतूणमुखकान्तितस्करः प्राच्यशैल-शिखराग्रप्ररूढजपाकुसुमच्छविः स्वच्छकुङ्कुमपिण्डपूर्णपात्रमिव निशाविलासिन्याः कुङ्कुमारुणैकस्तनकलश इवाखण्डलाशाङ्ग-नायाः क्षीरसिन्धुरिव हरिणाधिष्ठितो राम इव लक्ष्मणान्वितः सुग्रीव इव तारापतिः सुराजेव रक्तमण्डल उदयारुणमण्डलो रजनीपतिरुदयमाससाद । ततः कामिनीहृदयसङ्क्रामित इव चकोराङ्गनानेत्रपुटपीत इव रक्तकुमुदकोशलीढ इव क्षीणतां क्षणदाकृतो जगाम रागः । अनन्तरं शर्वरीव्रजाङ्गनाविष्कृत-नवनीतस्वस्तिक इव कुसुमकेतोः मुखच्छायामुद्रितमुकुर इव

शार्वरं शर्वरीसम्बन्धि । शेषत्वेन विवक्षायामण् । भवे तु टञ् स्यात् । एवं शार्वरस्य तमसो निवृत्तय इत्यादयो व्याख्याताः । तमो व्यजृम्भत । क्षयेन रजनीपतिरभ्युदयमा-समादित्यन्वयः । क्षणदा राजकन्या कन्दुको गेन्दुकः । गेन्दुकः कन्दुकः इत्यमरः । गेन्दा इति गालमसुरिया इति भाषायाम् । कन्दर्पस्य कनकदर्पणो मुकुरः । दर्पणे मुकुराद-र्शावित्यमरः । कनकपदं रक्तत्वेन साम्यार्थम् । उदयगिरिबालमन्दारपुष्पस्तबको नव्यम-न्दारगुच्छकस्तदाकृतिः । स्याद्गुच्छकस्तु स्तबक इत्यमरः । बालपदमारुण्यातिशयाय । प्राचीललाटतटे कुङ्कुमबिन्दुचक्रवदाकारो यस्य । अथ कुङ्कुमम् । काश्मीरजन्माग्निशिख-मित्यमरः । नभःश्रियः कनककुण्डलमिव कर्णवेष्टनमिव । कुण्डलं कर्णवेष्टनमित्यमरः । दिव्यवधूनां प्रसाधिका तद्धस्तात् स्खलमलक्तकपटलमिव । गगनेति स्पष्टम् । प्रस्थान-कनकेति च । कन्दर्पस्य कार्तस्वरतूणमुखकान्तेः सुवर्णनिषङ्गमुखशोभायास्तस्करोऽपहारकः । तच्छ्रेष्ठत्वादिति भावः । तूणोपासङ्गतूणीरनिषङ्गा इत्यमरः । प्राच्यां भवः प्राच्यः शैल-स्तच्छिखराग्रे प्रकटं जपाकुसुमं तच्छविः । द्युप्रागपेति यत् । ओड्रपुष्पं जपापुष्पमित्य-मरः । स्वच्छकुङ्कुमेन पिण्डं सान्द्रं पूर्णपात्रमिव निशाविलासिन्याः । पिण्डं सान्द्रे बले काले तूलेऽपि परिकीर्त्तितम् । पूर्णपात्रं वस्तुपूर्णपात्रे वर्धापकेऽपि च ॥ इति विश्वः । कुङ्कुमारुणैकस्तनकलश इवाखण्डलाशाङ्गनाया इन्द्रदिगङ्गनायाः । आखण्डलः सहस्राक्ष इत्यमरः । क्षीरसिन्धुरिव हरिणा विष्णुनाधिष्ठितः । पक्षे । हरिणेन । राम इव लक्ष्म-णेनानुगतः । पक्षे । लक्ष्मणा चिह्नेन । सुग्रीव इव तारा तन्नामिका स्त्री । पक्षे । तारा

श्वेतातपत्रमिव मकरकेतोर्दन्तपालिचक्रमिव वियन्महासेः श्वेतचामरमिव मदनमहाराजस्य वालुकापुलिनमिव निशायमुनायाः स्फाटिकलिङ्गमिव गगनमहातापसस्याण्डमिव कालोरगस्य कम्बुरिव नभोमहार्णवस्य चैत्यमिव मदनारिदग्धस्य मकरकेतोश्चिताचक्रमिव कलङ्काङ्गारशबलं सङ्कल्पजन्मनो गगनगामिगङ्गापुण्डरीकमिवाम्बरमहार्णवफेनपुञ्ज इव पारदपिण्ड इव कालधातुवादिनो राजतकलश इव दूर्वाप्रवालशबलः कन्दर्परथचक्रचारुरम्बरप्रासादस्य पारावत इव उदयाचलचारुचूडामणि-

---

नववाणि। मुराजेव रक्तं मण्डलममात्यादिममूहो यस्य। पक्षे। मण्डलं बिम्बम्। उदयेनारुणं मण्डलं बिम्बं यस्य सः। ततः कामिनीहृदये सङ्क्रामित इव चकोराङ्गनाभिर्नवपुटैः पीत इव कुमुदकोशैर्लीढ इवास्वादित इव क्षीणतां जगाम क्षणादाकृतौ रागश्चन्द्रमण्डलस्थं लौहित्यम्। अनन्तरं गृहपतिश्चन्द्र उज्जगाम। शर्वरी व्रजाङ्गना गोपी तस्या आविष्कृतं नवनीतस्य स्वस्तिकचतुष्कमिव। चौक इति भाषायाम्। नवनीतं नवोद्धृतमित्यमरः। स्वस्तिको मङ्गलद्रव्ये चतुष्कगृहभेदयोः। इति विश्वप्रकाशः। कुसुमकेतोर्मुखच्छायामुद्रितो मुकुर इव। मकरकेतोः श्वेतातपत्रमिव। वियन्महासेराकाशखड्गस्य। पालयतीति पालिः। पाल रक्षणे। ण्यन्तः। अच इः। दन्तस्य गजदन्तस्य पालिर्गजदन्तमयः। त्सरुरिति यावत्। मदनमहाराजस्य श्वेतचामरमिव। चामरं तु प्रकीर्णकमित्यमरः। निशायमुनाया वालुकापुलिनमिव। गगनमहातापसस्य स्फाटिकलिङ्गमिव पूजार्थं स्फटिकमयशिवलिङ्गमिव। काल एवोरगः कृष्णोरगस्तस्याण्डमिव। नभोमहार्णवस्य कम्बुरिव शङ्ख इव। मदनारिणा शिवेन दग्धस्य मकरकेतोश्चैत्यमिव। चैत्यमायतने बुद्धवन्द्ये चोद्देश्यपादपे। इति विश्वः। कलङ्काङ्गारः। यद्यप्यङ्गारोऽलातमुल्मुकमित्यमरः। साग्निकाष्ठमङ्गारः। अङ्गारचुम्बितमिव व्यथमानमास इति प्रयुक्तं भवभूतिना। तथापि निरग्निदग्धं श्यामं काष्ठमिहाङ्गारपदेन विवक्षितं योग्यत्वात्। कोइला इतिभाषायाम्। तेन शबलं चिताचक्रमिव सङ्कल्पजन्मनः। एतादृशेऽर्थे श्रीहर्षेण देशीय इङ्गालशब्दः प्रयुक्तः। चित्तेनु चिङ्गालमिवायशः पर इति। गगनगामिगङ्गाया मन्दाकिन्याः पुण्डरीकमिव सिताम्भोजमिव। गगन वक्तव्यं तदग्रे वक्ष्यते। अम्बरं व्योमैव महार्णवस्तस्य फेनपुञ्ज इव। कालधातुवादिनः पारदपिण्ड

रिव ऐरावतलुप्तसिन्दूरकुम्भस्थलमिव भग्नशृङ्गपुराणगोमुण्डखण्ड इव तारकाश्वेतगोधूमशालिनो नभःक्षेत्रस्य मलयजपिण्डपाण्डुरराजतपात्रमिव सिद्धाङ्गनाहस्तस्रस्तं ग्रहपतिरुज्जगाम। यस्य पुण्डरीकं लोचनमधुकराणां शयनीयसैकतमिव चित्तहंसानां स्फाटिकव्यजनं विरहवह्नीनां श्वेतशाणचक्रं मन्मथसायकानाम्। अत्रान्तरेऽभिसारिकासार्थप्रहितानां प्रियतमान् प्रति दूतीनां द्व्यर्थाः सेर्ष्याः सप्रपञ्चा विकारभङ्गुराः प्रवादा बभूवुः। तथाहि।

---

इव। दूर्वाप्रवालशबलो राजतकलश इव। दूर्वाप्रवालेति कलङ्कसाम्याय। कन्दर्परथचक्रचारुरुदयाचलचारुचूडामणिः। अम्बरमेव प्रासादो राजगृहं तस्य पारावत इव। गृहप्रकरणे। प्रासादो देवभुजाम्। पारावतः कलरवः कपोत इति द्वयोरमरः। ऐरावतस्य लुप्तसिन्दूरं मृष्टसिन्दूरं कुम्भस्थलमिव। श्वेतगोधूमैः शालिनः श्वेतत्वं तारासाम्याय। कावली गोहूं इति भाषायाम्। शोभमानस्य नभःक्षेत्रस्य भग्नशृङ्गः। भग्नविषाणत्वं वर्तुलत्वार्थम्। पुराणचर्मरहितो गोमुण्डखण्ड इव। सीमानिर्माणार्थं रक्षार्थं वा क्षेत्रे गोमुण्डः समारोप्यते। सिद्धाङ्गनाहस्तात् स्रस्तं भ्रष्टं मलयजेन घृष्टचन्दनेन पिण्डं चूर्णमतएवातिपाण्डुरं राजतपात्रं रौप्यपात्रमिव। यद्वा। मलयजपिण्डैर्घृष्टचन्दनगुटिकाभिः पाण्डुरमित्यादि। उभयत्र भ्रंशनवर्णनं चन्दनपङ्कबिन्दवो गुटिका वा तारा विकीर्णा इति ध्वनयितुम्। लोचनमधुकराणां पुण्डरीकमिव। वर्तुलत्वसासितसाम्यार्थं विकासपर्यन्तमात्रहेतु कुमुदम्। एवं पूर्वत्रापि। चित्तहंसानां शयनीयसैकतमिव शयनार्हसिकतामयदेश इव। विरहवह्नीनां स्फाटिकव्यजनम्। तत्सन्धुक्षकत्वादिति भावः। अत्र व्यजनं वर्तुलमग्निसन्धुक्षकं विवक्षितम्। छितनी इति भाषायाम्। अत्रान्तरे मानिनीमानपाटनपटुकुमुदिनीकान्तोदयावसरेऽभिसारिकासार्थप्रहितानां ज्योत्स्नाभिसारिकासमूहप्रेषितानां दूतीनामन्योऽन्यसङ्घट्टनविरहनिवेदनादिकर्मकुशलानां प्रियतमान् प्रति वल्लभान् प्रति द्व्यर्था उपालम्भावर्जनरूपार्थद्वयोपेताः। सेर्ष्याः। उपालम्भे। विकारैर्मदनविकारजन्यचित्तवृत्तिविशेषैर्भङ्गुरा मानावस्थायामिव न केवलं परुषा एवापितु किञ्चित्स्वापराधव्यञ्जका इत्यर्थः। आवर्जन इदम्। सप्रपञ्चा वक्रोक्त्यादिसहिताः प्रवादाः प्रकृष्टवैदग्ध्यविशिष्टा वादा बभूवुः। रतार्थिनी तु सङ्केतं याति या साभिसारिका। इति रसरत्नहारः। उपालम्भे। प्रत्यक्षरश्लेषमयेत्यादि स्वगुणं प्रकटयन्नाह। अवस्तीर्णं

अवस्त्रीकृतमात्मानं नाकलयसि तत्त्वतः कान्त प्रस्तर इव क्रूरो-ऽसि न चाकर्षकचुम्बकद्रावकेष्वेकोऽसि भ्रामकोऽसि परं कितव धर्मार्थान्यप्रयुक्तः क्षेपणिक इव मुधावाहिततरवारिस्त्वमसि सखेदमिव मनसा चिन्तयसि दुर्लभं जनं सत्त्वसारचरितो यो

---

कौपीनावशेषीकृतम्। अनुदरा कन्येतिवदल्पतार्थे नञोऽर्थः। उक्तं च। तत्सादृश्यम-भावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः। इति। आत्मानं तत्त्वतो नाकलयसि न जानासि। यथा धनलुब्धया काममञ्जर्या मलमल्लकशेषो वसुपालितोऽपवाहितस्तथा तवापि का गतिर्भविष्यतीति वक्ति। आत्मानमित्यादि। यद्वा। स्त्रीणां कृतं कार्मणादि कर्म। कृतमिति कृञः कर्मणि क्तः। तत्त्वतो नाकलयस्यत आत्मानमव रक्ष। यथा काममञ्जर्या आत्मानमवन् रक्षन् स महर्षिर्मरीचिः सेवक इव परिभ्रामितस्तथा त्वमपि भ्रमिष्यसीति ब्रवीम्यात्मानमवेति। स्पष्टं चैतदपहारवर्मचरिते। मूलकर्म तु कार्मणमित्यमरः। वैशिकं मतं दमभिधाय कुलटासक्तं मत्वाभिधत्ते। आत्मानं प्रत्यवतीत्यवा। अवेः कर्तर्यच्। सा चासौ स्त्री अन्यहन्त्री तया कृतमवस्त्रीकृतं नीचनारी कर्म। भृङ्गकीटन्यायादतिस्त्रीसेवनात् त्वं स्त्रीव परैर्ज्ञायस इति गदति। अवेत्यादि अवस्त्रीकृतं वधकयोषिद्भूतमात्मानं तत्त्वतो नाकलयसि। आवर्जने। सितत्त्वतो बद्धत्वा-द्धेतोः। षिञ् बन्धने। क्तः। त्वमेव मम प्रिया नान्येत्यत्र शपथ इति शपथरूपपाशा-दित्यर्थः। सितत्त्वत इत्यत्र झरो झरीति पाक्षिकसकारलोप इति तु जगद्धरस्य प्रमाद एव। अनचि च इति तकारद्वित्वे रूपसाम्यं बोध्यम्। अवस्त्रीभ्यो नीचस्त्रीभ्यः कृतं पर्याप्तमात्मानं नाकलय माजानीहि। मत्सख्येव त्वामभिलषत इति त्वं नीचनारीसक्तो माभूरिति भावः। कृतं युगेऽपि पर्याप्ते विहिते हिंसिते फले। इति विश्वप्रकाशः। कं सुखं सुखकारी लयः संश्लेष आलिङ्गनं विलासो वा यस्य न कलयोऽकलयः। न अकलयो नाकलयः। त्वत्तो मत्सख्या अन्यस्याःसितबद्धस्त्रीकृतं स्त्रीभ्यः पर्याप्तमात्मानमव प्रीणय। मत्सख्या सह रतिं विधायात्मानं सन्तोषयेति भावः। कं मूर्धसुखवारिष्विति विश्वप्रकाशः। लयो विलासे संश्लेषे इति च। यद्वा। नाकस्य दुःखस्य लयः संश्लेषः सम्बन्धो यस्य। अकं पापे च दुःखे चेति विश्वः। यद्वा। अस्य वासुदेवस्य वो वचोऽव-स्तव स्त्री लक्ष्मीस्तया कृतं पर्याप्तमवस्त्रीकृतं लक्ष्मीपूर्णमात्मानं तत्त्वतो नाकलयसि। जानासि चेत् कथं तां परित्यज्यान्यत्रासक्तो भवसि। अकारो वासुदेवः स्यात्। वचः-

रिपुमण्डलाग्रतो निर्वृतिमुपेत्य तिष्ठति। स खलु वीरः प्रतिपक्षस्य यः सम्प्रहारतः कुञ्जरान् नयति। छुतोरुकरवालसञ्चयोऽपि परमकाण्ड एव संम्पतन् महापदं विग्रहेण लभते। राजसेन रहितो राजसेन रहितो ध्रुवं विशारदा विशारदाभ्रविशदा विश-

---

स्थले च वः प्रोक्त इत्यलङ्कारहयम्। यमकश्लेषचित्रेषु बवयोर्डलयोर्न भिदित्यनुप्रासनाद्भेदाभावेनावार्यालङ्कारणानम्। यहा। सितस्त्वतो बद्धत्वाद्धेतोः। अर्थात् तया प्रेम्णा बद्धत्वादस्वीकृतमात्मानं नाकलय। सा किल त्वां धनेनाप्यविष्यतीति व्यङ्गम्। यहा। सितत्वाद्रतौ बन्धविशेषबद्धत्वात् स्वीकृतमात्मनं नाकलय। अत तत्समीपे गच्छ। यहा। नाकस्येवाकाशस्येव लयः संश्लेषो यस्य। निरर्थकसम्बन्ध इत्यर्थः। आकाशे त्रिदिवे नाक इत्यमरः। यहा। केन सुखेन लयो विलासस्तेन सितो बद्धस्तत्सम्बोधनम्। त्वत्तोऽन्यस्य स्त्री न। सर्वनाम्नोरन्यार्थकयोस्त्वत्तोस्तसिलन्तस्य पञ्चम्यन्तस्य प्रयोगो यथायथं बोध्यः। यथा पतिव्रतया मा स्वपतिःसेव्यत एवं पराङ्गना विदग्धेन सेवनीयेत्यर्थः। कृतं मिथ्याभाषणादिना हिंसितमात्मानमवधोतय। सत्यसम्भाषणात् तेजोऽभिवृद्धिर्जायत इति तदाचरेति व्यङ्गम्। कृञ् हिंसायाम्। यहा। के जले लयो विलासस्तेन सितावगत जलक्रीड़ाविदित। सितस्त्ववसिते बद्धे सिता शर्करेति हेमः। सितः समाप्ते धवले विबन्धज्ञातयोरपि। इति विश्वप्रकाशः। यहा। नाके स्वर्गे लयो विलासो येषां ते नाकलया देवास्तद्वत् सितोऽवगतः। यहा। अवस्वीकृतं लक्ष्मीहिंसितमात्मानं तत्त्वतो नाकलयसि पूर्वं तथैव धनदानादिना सर्वस्पृहणीयतामापादित इदानीं तामेवायासयसि। सा दरिद्रावस्था ते किं विस्मृतेति व्यङ्गम्। कस्य जलस्य लयो विलासो नीचगमनरूपस्तेन सितावगत नीचगमन प्रसिद्ध। स्त्रीकृतं स्त्रीहिंसितमात्मानमव। यहा। वकारो वासुदेवस्तेन तुल्यमव। इवार्थे वः। अव कृष्ण इव स्त्रीकृतं स्त्रीपर्याप्तमात्मानं तत्त्वतो नाकलयसि। अन्याभिः सह क्रीड़ां करोषि चेत् कुरु परन्तु ममाप्यपि सह क्रीड़ां कुर्विति भावः। व वा यथा तथैवैवं साम्य इत्यमरः। यहा। सितस्त्वतो धवलत्वाच्छ्वेतोरेव कृष्ण इव स्त्रीकृतं स्त्रीपर्याप्तमात्मानं नाकलय। तदीयशरीरवर्ण एव त्वच्छरीरे नास्ति कथं तदीयसामर्थ्यमिति भावः। यहा। येन यशसा सितत्वं तस्मात्। नाके स्वर्गे ल इवेन्द्र इव स्त्रीकृतमात्मानमव। यशो यः कथितः शिष्टैः। ल इन्द्र इत्येकाक्षरकोशः। अव रवे गतौ कान्तौ प्रीतौ तृप्तौ युतौ श्रुतौ। प्राप्तौ श्लेषेऽर्थने वेशे भागे इच्छौ यहे वधे॥ साम्येऽवगमे

**दात्मनीनमहिमा महिमानरक्षणक्षमा क्षमातिलक धीरताधीरता मनसि भूतताभूतता वचसि साह सेन साहसेन कमला कमला-पराजितापराजिता सा त्वदर्पणा दर्पणाकारविमलाशया शयाज-**

---

कामे क्रताविति कविकल्पद्रुमः। दूतीसंवादवाक्यैकव्याख्यादिग्दर्शिता मया। ग्रन्थबाहुल्यभीतेन चैतन्न स्वधियाधिकम्॥ हे कान्त कस्य सुखस्यान्तो यस्मात्। प्रस्तर इव। क्रूरोऽसि पाषाण इव कठिनोऽसि निष्ठुरहृदयोऽसि। तत्रापि न चाकर्षको यत्सम्बन्धात् प्रत्युप्तमपि लोहं निःसरति। अयस्कान्तमणिश्चुम्बको यत्सम्बन्धाल्लोहमुपगच्छति सूर्यकान्तो वा सूर्यकराभिसृष्टयच्छायासम्बन्धादिन्धनादावग्निरुत्पद्यते। द्रावको यत्सम्बन्धाल्लोहं द्रवति। चन्द्रकरस्पर्शात् स्वयं द्रवति स चन्द्रकान्तो वा भ्रामको यत्सम्बन्धाल्लोहं भ्रमति स गुरिश्रा इति ख्यातः। चुम्बको द्रावकश्चैवाकर्षको भ्रामकस्तया। एकद्वित्रिचतुःपञ्चसम्मुखाः सम्भवन्ति ते॥ इति लोह शास्त्रे। कामकलाकौशलेन यो नारीमाकर्षति स आकर्षकः। रतिकौशलेन यश्चुम्बति स चुम्बकः। औषधिविशेषयोगेन कुचादिमर्दनेन वा यः कठिनकामिनीं द्रावयति स द्रावकः। एतेषु नैकोऽसि। परं केवलं भ्रामकोऽसि। अन्यासक्तो योऽन्यनारीं भ्रामयति प्रतारयति स भ्रामकः। कस्य शत्रुशिरसोऽन्तो यस्मात् कान्तः। आकर्षको धनुराकर्षकः। चुम्बकः सैन्यप्रवेशज्ञः। द्रावकः परसैन्यविद्रावणः तेष्वेकः श्रेष्ठोऽसि। भ्रामकोऽश्वादीनामसिः खड्गस्य भ्रामको वा कान्त मनोहर न प्रस्तर इव क्रूरोऽसि। प्रार्थितः सन्नपराधान् क्षमसे। आकर्षकचुम्बकद्रावका इषवो बाणा यस्य स कामस्तद्वदेकोऽद्वितीयोऽसि। भ्रामको नारीचेतसाम्। एकोऽद्वितीये श्रेष्ठे च। क्रूरो कठिननिर्दयौ। इत्युभयत्र विश्वः। धर्मार्थमन्येन केनचिद्धर्मिष्ठेन राज्ञा नागरिकादिना वा प्रयुक्त आतरं विनाकिञ्चनजनान् परपारं नयेति प्रेरितः क्षेपणिको नाविक इव सुधा वृथा वाहिततरं वारि जलं येन। अत्र स्वामिन एव धर्मो न नाविकस्येत्यर्थः। सुधा वाहिततरं वारि जलं येन वा। तदनुरञ्जनदशायामिति भावः। अतिशठो सेवेतिवदुपहासार्थं सेर्ष्ययोक्तम्। न तु तत्त्वकथनम्। रसाभासापत्तेः। यद्वा। सुधा वाहितस्तरवारिः खड्गो येन। आवर्जने। कितव विदग्ध धर्मार्थं धर्मप्रयोजनं सुधावा व्यर्थावना अहिताः शत्रवो यस्य। अन्येन शत्रुणा प्रयुक्तं शस्त्रादि तत्क्षेपणिको नाशकस्तरवारिः। खड्गस्तद्वत्। क्रूर धर्मार्थाद्धर्मप्रयोजनादन्येनाधर्मेण प्रयुक्तः। यद्वा। त्रिवर्गे धर्मार्थाभ्यामन्यः कामस्तेन प्रयुक्तः। कितवो द्यूतकृद्धूर्तविदग्धेषु निगद्यते। तरवारिर्मतः खड्ग इति धरणिद्वयम्। सुधात्त्विष्फले

**विनिर्जितकिसलया सलयाङ्गुलिविभ्रमेण विभ्रमेण प्रतिगवाक्ष-शलाकाविवरं विलोकयन्ती विलोकयन्ती त्वया विना साविना सायमनुभवन्ती दुःखानि जीवनायक जीवनायक इह नाश्नयन्ति**

---

इत्यमरः। तूष्णीं स्थिते पृच्छति सखेदं सकष्टं मनसा दुर्लभमिव जनं नायिकान्तरं चिन्तयसि। सखे! मिव दमिव खण्डितमिव शृङ्गारे सखे दमित्र कलत्रमिव दुर्लभं जनम्। इकार उच्यते कामः। दं कलत्रे बुधैः प्रोक्तं छेदे दामे च दातरि। इत्येकाक्षर-कोश उभयत्र। दः शुद्धे दोऽवदाते च दातरि च्छेद दानयोः इति विश्वप्रकाशः। स त्वसारचरितस्तुच्छव्यवहारः। या अगन्ति ता अगो मण्डलस्यागो मण्डलागः कुलटा रिपभूता मण्डलागो रिपुमण्डलागमासु रतो रिपुमण्डलागतो निर्वृतिं सुखमुपेत्य तिष्ठति। अक अग कुटिलायां गतौ। यद्वा। निर्गता वृतिरावरणं यस्यास्तां निरावरणां वेश्याम्। वीर निन्दायां रिपुमण्डलागतः शत्रुखड्गान्निर्वृतिं सुखम्। शत्रुणा खड्गे धृते स्वयं सुखी तिष्ठतीत्यर्थः। निर्वृतिं चेलादेरावरणं वा। भयादुपेत्य। शृङ्गारे सत्त्वेन गुणेन सारचरितो यो रिपुमण्डलागतः शत्रुमण्डलागतो निर्वृतिं जीविकाम्। यद्वा रिपुमण्डलागतः सपत्नीसमूहागतः। सप्तम्यर्थे तसिः। निर्गता वृतिरन्यपुरुषान्तरवरणेच्छा यस्याः। मत्सरी तामुपेत्य तिष्ठति। वर्त्तमानसामीप्य इति लट्। पूर्वमन्याः सपत्नी-रनादृत्य त्वं तस्यामेवानुरक्तः स्थित इदानीं तथैव कर्तव्यं त्वयेति स्तौति। कौक्षेयको मण्डलागः करवालः कृपाणवत्। इत्यमरः। मण्डलं देशसङ्घयोरिति विश्वः निर्वृतिस्तु सुखं जीव्ये अभवे अस्तत्वेऽपि च। इति धरणिः। अपराह्ण स खलु वीरः शूरो यः प्रति-पक्षस्य शत्रोः सम्प्रहारतः कुञ्जरान् गजान्नयति। यद्वा। विशेषेणेरयति वीन् पक्षिणो वेरयतीति वीरः। सम्प्रहारतो गमनात्। सम्प्रहारो रणे गताविति हैमः। ईर गतौ कम्पने च। यद्वा। विशिष्टा इरा मद्यं यस्य। मद्यप इति यावत्। इरा भूमिसुरा-वारिभारतीषु प्रयुज्यते। कुञ्जरोऽनेकपे केशे धातक्यामपि कुञ्जरा॥ वीरस्तु सुभटे श्रेष्ठे वीरो भल्लातकेऽपि च॥ इति विश्वप्रकाशस्त्विषु। प्रतिगतः पक्षं प्रतिपक्षो बलं तस्य। यद्वा। प्रतिपक्षस्य सख्युः सहायस्य वा। पक्षो मासार्धके गेहपार्श्वे साध्यविरोधयोः। केशादेः परतो वृन्दे बले सखिसहाययोः॥ पतत्रे चुल्लिरन्ध्रे च देहाङ्गे राजकुञ्जरे। इति विश्वप्रकाशः। यद्वा। विशेषेण इं काममीं लक्ष्मीं वा राश्यादत्ते वीरः। इकारः कथ्यते कामो लक्ष्मीरीकार उच्यते। इत्येकाक्षरकोशः सम्यक् प्रकृष्टोऽत्युत्कृष्टो हारो मुक्तादिमाला तान् सम्प्रहारतः। द्वितीयार्थे तसिः। कुञ्जरान् केशान् नयति। हारो

सुभगम् । अन्यास्तावदासतां दासतां पुरतोऽहमेव भजामि । मैत्रतोऽमैत्रतोऽस्तु अञ्जसारतः सारतः किमपि कन्दर्पकं दर्पकं न तनोषि विशेषतोऽशेषतः स्थितमेव मरणं शठधियां शोधन

---

मुक्तावली युद्ध इति विश्वप्रकाशः । यद्वा सम्प्रहारतोऽत्युत्कृष्टरतियुद्धे सप्तम्यर्थे तसिः । खलु स्यात् प्रतिषेधेऽपि निश्चयेऽप्यवधारणे । इति विश्वः । अन्याह । धृत उरुकरेण विशालहस्तेन वालानां शत्रुकेशानां सञ्चयो येन । यद्वा धृत उरुर्महान् करवालस्य कृपाणस्य सञ्चयो येन । यद्वा ऊरुपर्यन्तौ करावुरुकरौ ताभ्यां धृतो वालानां प्रतिपक्षलक्ष्मीकोशानां सञ्चयो येन । आजानुबाहुरित्यर्थः । यद्वा । धृत उरुकरेण भूरिराजभागेन वालानामज्ञानां सञ्चयो येन । यद्वा । धृत उरुकरेणोरुकरणां वा वालानां सञ्चयो येन यद्वा । धृत उरुकरवालानां सञ्चयः । सुरतबन्धे । विग्रहेण शरीरेण कलहेन युद्धेन पत्नियहणेन वा महापदं महास्थानं महापत्तिं वा परं शत्रुं परमत्यर्थं वाऽकाण्डेऽनवसरे परमकाण्ड उत्कृष्टावसरे वा । विग्रहो युधि विस्तारे प्रविभागशरीरयोः । इति हैमः । अपराह । राजसे रजोगुणविकारे सत्यनरहितो मनुष्याननुकूलस्त्वं न राजसे रहितो मत्सख्या जनैर्वा त्यक्तः । रह त्यागे । क्तः । यद्वा । राजसेन प्रज्ञादाणि रजोगुणेन रहितो नरहितो मनुष्यहितो न राजसे ध्रुवम् । यद्वा । राजस रजोगुणप्रधान इ नरहितोऽप्रभुस्त्वं न राजसे यतो रहितः प्रभुणा त्यक्तः । नरेषु हितो राजसे ध्रुवम् । ध्रुवं तु निश्चिते तर्के निश्चले शाश्वतेऽन्यवत् । इति विश्वप्रकाशः । यमकालङ्कारः । अन्याह । विगता शारदा सरस्वती यस्य तत्सम्बोधनम् । धृष्टो वा चतुरो वा । विशारदो बुधे धृष्ट इति विश्वप्रकाशः । स्त्रीविशेषणं वा । विशिष्टः शारदोऽभ्रो मेघस्तद्वद्विशदा निर्मलान्तःकरणा । विशन् प्रविष्टो भवन् आत्मनीन आत्महितो महिमा महित्वं यस्याः । मह उत्सवो येषां ते महिनस्तेषां मानरक्षणे सन्मानपालने क्षमा । क्षमातिलक पृथ्वीभूषण शान्तितिलक बहिः शान्तिप्रदर्शक तव मनसि धीरता वुद्धिरता सर्वकालिकीत्यर्थः । अधीरता कातरता । वचस्यभूतताऽसत्यता भुवि पृथिव्यां तता विस्तृता यद्वा । अकारो वासुदेवस्तस्मादुद्भूतस्तत्ता . कन्दर्पता । यद्वा । अक्षेण व्यवहारेण मा लक्ष्मीः सा तिलकमस्य । यद्वा । अक्षस्य विभीतकस्य मा लक्ष्मीस्तत्तिलक । अक्षः कर्षतुषे चक्रे शकटव्यवहारयोः । आत्मजे पाशके चाक्षमिति विश्वप्रकाशः । विशेषेण शारं हिंसां ददातीति विशारदः । शॄ हिंसायाम् । घञ् । महिम्नानन्ति प्राणन्ति ते महिमाना मानधनास्तेषां रक्षणक्षम हे धीर तास्ताद्दश्यो धीरतास्तव मनसि तव वचसि भूतता सत्यता

यशोधन प्रेमहार्यामहार्याशयोत्काटाक्षैः कटाक्षैराविर्भूतदास्यास्तदास्याः परिजनाः कमलाकृतिनारीणां कमलाकृतिनारीणां भवता

---

भूतता पृथ्वीप्रख्याता। भूतं न्याये पिशाचादौ भूतं सत्योपमानयोः। इति विश्वः। विशारदाभविशदा विशिष्टशरदभ्रस्वच्छा। निष्कपटहृदयेति यावत्। आत्मनि स्वविषये विशिष्टं शं श्रेयो दाति विशदाः। दो अवखण्डने। इनस्य सूर्यस्य महिमा महत्त्वं यस्य तादृशस्त्वम्। शं श्रेयसि शकारः स्याच्छिवे सौख्ये प्रकीर्तितः। इत्येकाक्षरकोशः। शं धर्मे शास्तु शास्तरीति विश्वप्रकाशः। आत्मन्विश्वजनभोगोत्तरपदात् ख इति खः। आत्मनीने। अपराह। सा मत्सखी त्वामाह। हे सेन मत्प्रभो परतन्त्र सा मनसापि नान्यमनुसरामीति प्रतिज्ञाविशिष्टाहम्। आहसेन भवदीयेषद्धासेन कस्य सुखस्य मलाधारपात्री। मल मल्ल धारणे। पचाद्यच्। पराजिता कमला लक्ष्मीर्यस्याः सा कमलापराजिता। आहिताग्न्यादिः। अतएवापराजिता। अन्यस्त्रीभी रूपसुरतकौशलादिभिरपराभूता। पराजितपराभूताविद्यमरः। यद्वा। आहसेनेषद्धासेन अपराजिता एतदभिधाना देवी पराजिता पराभूता कं मलमस्याः कमला शिरोमालिन्यविशिष्टा। सौमन्तकर्मण्यनभिज्ञेति यावत्। तादृशी कमला लक्ष्मीः। यद्वा। साहसेनाभिसरणरूपेण कमला लक्ष्मीस्तत्परा कमलापरा लुब्धेति यावत्। जिता यथा लुब्धा नाभिसरत्येवं प्रीत्या मत्सख्यभिसरतीत्यर्थः। ननु कुरूपा सा केनापि नाद्रियत इति सा स्वतो धावति न तव मन्मुद्देतुरित्याह। आहसेन सा प्रसिद्धा कमला लक्ष्मीः पराजिता। मतमस्येति शेषः। सखीभावमाह। ला आदाने। लातीति ला न ला अला लुब्धा कं सुखमपराजिता त्वया पूर्वं प्रोत्साहनाद्दीपिता। राजृ दीप्तौ। यद्वा। साहसेनाहसेन युक्तेति शेषः। सा मत्सखी कमला वरस्त्री। आकमला बहुलक्ष्मीका। कमला तु वरस्त्रियामिति शाश्वतः। हस इति स्वनहसोर्वेत्यप्प्रत्ययान्तः। यद्वा। यया परा कमला पराजिता सा मतमस्याह। आहसेनेषद्धासयुक्तेन त्वया जितमात्मानमाहेत्यर्थः। कीदृशी सेना समभुः कमला लक्ष्मीर्यस्यास्तस्या लक्ष्मीदानभोगादियुक्ता न त्वस्वामिकलक्ष्मीवद्दानभोगहीनेत्यर्थः। इतराह। त्वय्यर्पणमस्यास्त्वदर्पणा दर्पणाकारौ मुकुराकार आस्यौ यस्याः। शयाजेन करकमलेन विनिर्जितकिसलया जितनवपल्लवा। अङ्गुलिविभ्रमेणाङ्गुलिभ्रमणेन सलया सविलासा। लयो विलासे संश्लेषे साम्ये तौर्यत्रिकस्य च। इति विश्वप्रकाशः। गवाक्षेषु शलाका जन्तूनामागमनप्रतिषेधार्थं प्रयुक्ताः काष्ठादिनिर्मितास्तासां विवरं विवरं प्रति प्रतिगवाक्षशलाकाविवरं विलोकयन्ती पश्यन्ती विलोकवत् पश्चिमवदा-

मुखं च मलिनितं विश्वस्य विश्वस्य व्यवस्था समासाद्यमदासाद्य-
मनेककालसङ्केतसङ्गो तनुषे तनुषेकमनङ्गमनङ्गपुष्पेषु पुष्पेषु

---

चरन्ती विलोकयन्ती। यथा पक्षिणः पञ्जरशलाकान्तरेण पश्यन्त्येवं सापि भवानागतो न वेति गवाक्षशलाकान्तरेण पश्यति। गवाक्षशलाकान्तरदर्शनं परकीयात्वद्योतकम्। स्याच्छलाकापि मदनसारिकाशल्ययोः शरे॥ छत्रे पञ्जरकाष्ठे चेति विश्वप्रकाशः। उक्तं च। स्वानूढास्वानुरक्ता स्त्री परकीया निगद्यते। उत्तमाधमभेदाभ्यां द्विविधैषा पराङ्गना॥ अलक्षितानुरागैषा स्त्रीशाकल्योत्तमा भवेत्। तद्भिन्ना त्वधमा ज्ञेया तद्भेदा लक्षितादिकाः॥ परोढाकन्यकाभेदाद्द्विविधा द्विविधा मता। विदग्धानुदिता चैषानुशयानाथ लक्षिता॥ गुप्ता च कुलटा चेति षट्प्रकारोदिता बुधैः। इत्यलङ्कृते रसरत्नहारे। यत्तु अप्रकट-परपुरुषानुरागा परकीयेति तन्न। कुटलाया असङ्ग्रहात्। उपालम्भपक्षे नञ्समासः। विस्मेण भ्रमणेन। स्याच्छलाकापि मदनसारिकाशल्ययोः शरे। पञ्जरकाष्ठे चेति विश्वप्रकाशः। इतराह। अविना मेषेण त्वया विना सायं सायङ्काले दुःखानि त्वद्वियो-गदुःखान्यनुभवन्ती तिष्ठति तामनुसरेति व्यङ्ग्यम्। धीरेयम्। प्रियं सोत्प्रासवक्रोक्त्या मध्या धीरा दहेद्रुषा। इति रसरत्नहारः। अविना रक्षकेण त्वया विना दुःखान्य-नुभवन्त्यतः सायं सादमनुभवन्ती तिष्ठति। अत्र रक्षणादौ। सर्वधातुभ्य इनिरितीनिः। षो अन्तकर्मणि। आदेच इत्यात्वम्। आतो युगिति युक्। अन्याह। जीवनायक प्राणहारक जीवनाय जनार्थम जलहरणार्थमित्यर्थः। सुभगं शोभनपशुं त्वां के नाश्रयन्ति। भगमैश्वर्यमाहात्म्यज्ञानवैराग्ययोनिषु। पश्वीर्य्यप्रयत्नेच्छाश्रीधर्मरविमुक्तिषु॥ इति विश्व-प्रकाशः। अधीरोक्तिरियम्। अधीरा परुषोक्त्येति रसरत्नहारः। शृङ्गारे। जीवनायक मत्सखीप्राणेश जीवनाय प्राणधारणार्थं के जनाः सुभगमैश्वर्ययुक्तं त्वां नाश्रयन्ति। क इति पुंल्लिङ्गनिर्देशो यदि पुरुषाः स्वप्राणधारणार्थं त्वामाश्रयन्ति तर्हि स्त्रीणां का वार्तेति द्योतयितुम्। अपराह। अन्यया मत्सख्यतिरिक्तयास्तः चिरन्तत्सम्बन्धोधनम्। अत एवावद तस्यां क्रोधादसम्भाषक। असतां परपीड़ानभिज्ञानां पुरोऽग्रे दासतां दास्यमहमेव भजामि। असतोऽमैवाज्ञतोऽमिवभावात्। मैत्रास्तु वदो वदावदोवक्तेत्यमरः। यद्वा। अन्यैस्त्वदपेक्षयान्यैः शृङ्गारिभिस्तत्सम्बन्धिभिर्वास्ता चिरम् तया सह वदति तत्सम्बोधनम्। यद्वा। अन्यास्त अतएव दास पुरोऽहमेव भजामीति तां दासतां पूर्वंस्वीकृतां मत्सख्या दासतामव रक्ष। यद्वा। अन्यासक्तेनान्यनारीपरित्यक्तेनावदाभाषणकर्त्री। निर्माल्योज्झि-तपुष्पदामनिकरे का षट्पदानां रतिः। इत्यहं सतामेव दासतां भजामीति। यद्वा।

**रुजा तरसा जातरसा मन्दाचमन्दा चणं भ्रमन्ती मुह्यति। कामधुराधरेण का मधुराधरेण मुक्ता रजोराजिविशेषकेण विशेषकेण मुखेन्दुना तव हृदि लग्ना मदिमाकरेण करेण खेदवि-**

---

भवनमावो घञ्। अन्यासानामावदा रचणकर्त्री। अशरणशरणेति यावत्। प्रीतिप्रदा वा तृप्तिप्रदा वा। यद्वा। अप्रशस्तो मश्चन्द्रोऽस्यास्ति। अमि सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः। ज्ञापितः क्वासि हे सुभ्रु इत्यत्र सम्बुद्धिकृत्स्नो यथा रामविरहातिशयपोषकस्तथा सर्व्वथाप्रयोजकत्वद्योतनाय नपुंसकप्रयोगः। अनाः प्राणिनस्तेभ्यो हितान्या। तस्मै हितमिति यत्। सतामावदा। त्वयेति शेषः। असा तिरस्कृता। इदानीं दासतां भज। कीदृशी पुरो नमयां मेव लक्ष्मीव। इन्तेर्विच्। हे अहाम्ब्छेदक अवापि पूर्ववत्। मः शिवश्चन्द्रमा वेधाः। हकारश्छेदने मत इत्युभयत्रैकाचरकोशः। अन्या इतराश्चावदासतां तिष्ठन्तु। अहमेव पुरोदास्यं भजामि। अपराह्ण अञ्जसा शैघ्र्येण सारतो बलात्। सा तन्वी तव प्रियेति शेषः। त्वं रतः सक्तः किममि दर्पकं न तनोषि। किमुत्कृष्टं दर्पकं दर्पं न तनोषि। विशेषतो विशेषात्। अशेषतो निःशेषात्। मरणं स्थितमेव। माधुर्यं गुणः। मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू। अवृत्तिर्लघुवृत्तिर्वा तन्माधुर्यमिति स्मृतम्॥ इति काव्यप्रकाशे। परा प्राह। हे शठधियां जडबुद्धीनां शोधन यशसा अधन बुद्धिग्रद्धियशोहीन। उत्कटमसौम्यमचि येषु तैः कटाचैः प्रेमहार्यं सुखहारणीय या त्वां क्रूरकटाचैरामन्वयसि तस्यास्त्वं वश्य इत्यर्थः। अत एवामहार्याशय महानीचाशय। अस्तं त्यक्तं दास्यं यया तस्या आविर्भूतं दास्यं यस्मिन् तत्सम्बोधनम्॥ परितो जनान् स्वशिक्षकजनानस्यति। तया कार्मणादिना हृतप्रज्ञतया तत्सम्बोधनम्। आवर्जने। शठधियां जडबुद्धीनां शोधन शिक्षक। अतो यशोधन प्रेमहार्यं केवलप्रणयवश्य। अतो महार्याशयात्युन्नताभिप्राय। तदा मत्सख्या मानसमये। उत्कटाचैः कटाचैर्भवत्सम्बन्धिभिः। अस्या अस्मत्सख्याः परिजना अस्मादादय आविर्भूतदास्याः। यस्मिन् काले तया मानः कृतो भवता च क्रूरकटाचैः सा दृष्टा तदारभ्यैवास्मदादयस्तत्परिजना भवत्सेवकाः संवृत्ताः। एवं च चिरसेवकानामस्मदादीनां प्रार्थनया सा सुसम्पन्नमनोरथा सम्पादयितव्येत्यर्थः। यद्वा। उत्कटव्यवहारैः। यद्वा। उत्कटभाभिर्वीक्षितैः। यद्वा। तदा भवत्कोपकाले उत्कटाचैः क्रूरैः कटाचैरित्यादि पूर्ववत्। अत्र पचे सर्वथा तवैव दोष इत्यर्थः। काचिदाह। भवतारीणां शत्रूणां कमलाकृतिनारीणां लक्ष्म्याकृतिस्त्रीणां कमलाकृति मुखं न मलिनितमिति न। यद्वा। कृतिना भवतारीणां शत्रूणां कमला लक्ष्मीर्न मलिनिता न मलिनीकृता। कमलाकृति पद्माकारं नारीणामर्था-

न्दुपयोधरेण पयोधरेण वचःफलकाञ्चनेन जितानाविलकाञ्चनेन कामदारुण मदारुणनेत्रास्मरमयं रमयन्तं त्वामदयं मदयन्ती परमकमितारं परमकमितारं वाञ्छति हारिणा हारिणा स्तन-

---

च्छव नारीणां मुखं न मलिनितमिति काकुः। नपुंसकमनपुंसकेनेति नपुंसकैकशेषः। कृती कुशल इत्यपीत्यमरः। यद्वा। कमलया लक्ष्म्या कृती तेन भवतारीणां नारीणां कमलाकृति मुखं न मलिनितम्। काकुः पूर्ववत्। यद्वा कमलाकृतिन् पद्माकार निर्लेपत्वेन साम्यं लक्ष्मीकुशलेति वा सम्बोधनम्। नारीणामा साकल्येनातिकठिनतया वैदग्ध्येन वा कोऽपि नास्मान् द्रावयितुं पटुरिति मत्तुतापन्नानां नारीणां कमलाकृति कमलरम्यं मुखं न मलिनितमिति काकुः। अकाकुरुपालम्भपक्षः। काचिदाह विश्वस्य सर्वस्य विश्वस्य विश्वासं कृत्वा सा तव प्रिया समा सलक्ष्मीका विगतावस्था मर्यादा वयो वा यस्याः। आदितोऽसमा विषमा त्वं तु सादानामादयोग्यं तनुषे शरीराय। तनुः स्यात् तनुषा सार्धमिति शब्दभेदप्रकाशः। कमलपक्षे हार्जने तनुषे आसेवकं विश्वस्य सर्वस्य जगतो मध्ये त्वया व्यवस्था समामादि असमं विषमस्येत्यसमासा हे असमास इति वा आद्यं प्रथममतनोः कामस्यसेकं कं सुखम्। पुष्पं विकाशि कुसुमं स्त्रीणांच रजसि स्मृतम्। इति विश्वः। अनङ्गमशरीरं पुष्पेषुपुष्पेषु कामशरेषु तरसा वेगेन जातरसा मन्दाचं मन्देक्षणं भ्रमन्ती मुह्यति। आवर्जने। हेऽनङ्ग साक्षात् काम अनङ्गमसम्बद्धं प्रति पुष्पेषुपुष्पेषुरुजा कामवाणरुजा तरसा वेगेन जातरसोत्पन्नानुरागा मन्दाक्षमन्दा लज्जामन्थरा चणं भ्रमन्ती मुह्यति। धुराया धरो धुराधरः। भागुरिमते टाप्। कामं धुराधरस्तेनात्यन्तभारवाहकेनाधरेण नीचेन रजोराजिभिर्विशेषकं तिलकं यस्य तेन त्वया। विशेषस्य हावादेः शेषो यत्र तेन मुखेन्दुनोपलक्षिता मधुरा रम्या मूर्तिः कास्त्री भुक्ता न कापीत्यर्थः। एतादृशेनैतादृश्यो बह्व्य उपभुक्ताः। समालङ्कारः। समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोः। इति लक्षणात्। आवर्जने। कामस्य धूः कामधुरा। ऋक्पूरिति समासान्तः। तस्या अधरस्तेन मधुरः सुधाधिकस्वादोऽधरोष्ठो यस्य तेन। मुक्तारजोराजिभिर्विशेषकं तिलकं यत्र तेन। एतन्निर्माणावसरे बहवो मुखेन्दवो निर्मितास्तेषु रम्यत्वादस्यैव प्रयोगः कृतो विधिनेति विशेषेण शेषो यस्य तेन मुखेन्दुनोपलक्षिता का कापि स्त्री वर्तते। शेषो यदत्र मत्सखीं ज्ञात्वा न चलति चेत् सामान्यरूपेणाभिधायैनं नेष्यामीति छलप्रधानाया इयमुक्तिः। तमालपत्रतिलकचित्रकाणि विशेषकम्।

कुम्भेन हारिणाचिह्नचिह्नारिणा चक्षुषा हारिणा। अनन्तरं दुग्धार्णवप्रविष्टमिव स्फटिकगृहप्रविष्टमिव श्वेतद्वीपनिवाससुख-मनुभवदिव जगदामुमुदे। क्रमेण च विघटमानदलपुटकुमुद-

---

इत्यमरः। इतराह। तव हृदि लग्ना कापि वर्त्तते। अस्मदिव आकारस्तेन दासीत्वं व्यङ्ग्यम्। करेण स्वेदविन्दुभिः पयोधरो जलधरस्तेन वक्षःफलकेऽञ्चनं गमनं यस्य। पतितत्वादित्यर्थः। तेन पयोधरेणोपलक्षितामाविलकाञ्चनेन जिता। श्यामवर्णत्वादित्यर्थः। आवर्जने मदिव आकारेण करेण स्वेदविन्दुपयोधरेण वक्षःफलकस्याञ्चनं पूजनं रम्यत्वं येन। जितमनाविलं स्वच्छं काञ्चनं येन। गौरत्वादिति भावः। तेन पयोधरेणोप-लक्षिता तव हृदि लग्ना कापि वर्तत इति पृच्छति। अलि चेत् तामनुसरेति व्यङ्ग्यम्। अकर्मकठिनौ हस्तौ पादौ चाध्वनि कोमलौ। इति सामुद्रिकलक्षणं तु पुरुषविषयम्। अञ्चु गतिपूजनयोः। काञ्चनं चम्पके हेम्नीति विश्वः। अन्याह। कामेनाभिलाषेण दारुण मदारुणनेव। अस्मरमयमदयं रमयन्तं त्वाम्। परित्यज्येति शेषः। मदयन्ती मत्ता का परमत्यर्थमकं दुःखमितारं प्राप्तवन्तं परं भिन्नमकमितारं मकामुकम्। अकं पापे च रोगे चेति विश्वः। आवर्जने कामेन मदेन दारुण कठिननारीणामप्ययत्नेन द्रावक। मदयन्ती सीधुसेवनात्। अत एवारुणनेत्र। कामदाभिलाषप्रद। अरमयमदयं रमयन्तं परमकमितारं परमकामुकं परमकं परमसुखमितारं त्वां वाञ्छति। कामुके कमितानुक इत्यमरः। अत्रापि समालङ्कारः। पराह। हारिणाऽन्योन्यं युद्धवता। पतितत्वादिति भावः। अरिणा जनानां हियतामम्पादनेनेत्यर्थः। एतादृशेन स्तनकुम्भे-नोपलक्षिता। हे गर्ते ऋच्छति हारि। ऋ गतौ। अच इः। हारिणा गर्तंगतेनात एवाधिकचिह्नारिणा प्रेक्षकनेत्राभिलाषहारकेण। कृत्सितत्वादित्यर्थः। चक्षुषा चोपलक्षितं त्वामाह। एतादृग् दोषविशिष्टा त्वामेतादृशमाहेत्यर्थः। आवर्जने। हारिणाधिकचिह्ना-रिणा हरिणसम्बन्धिनेवकान्तिहारिणा चक्षुषोपलक्षिता हारिणा हारवता हारिणा करिक-लभकुम्भानुकारित्वाद्रम्येणेत्यर्थः। स्तनकुम्भेनोपलक्षिता। अनेन मत्सखी युवतिः सुन्द-रावयवा प्रसाधिता चेति सूचितं मदम्। हा गर्तेऽपि निगद्यत इत्येकाक्षरकोशः। निरीक्ष्य लोकव्यवहारजातं रीतिं कवीनामथ कोशजालम्। व्याख्या मयेयं रचिता महेशपादारविन्दे प्रणिधाय चेतः॥ चन्द्रिकाव्याप्तिं वर्णयन्ति। अनन्तरं चन्द्रोदयो-त्तरं दुग्धार्णवप्रविष्टमिव स्फटिकगृहेषु प्रविष्टमिव श्वेतद्वीपनिवासस्य सुखमनुभवदिव जगद्वत्र मासाद्यत्वेन मुमुदे। मुद हर्षे। क्रमेण कन्दर्पकेतुवांसवरणाजनकनगर-

काननकोशमकरन्दविन्दु-सन्दोहमुदित-मुग्धमधुकर-कुलकलरुत-मुखरितदिगन्ते चन्द्रिकापानभरालसचकोरकामिनीभिरभिनन्दितागमने सुरतभरपरिश्रमखिन्नपुलिन्दराजसुन्दरीस्वेदजलकणिकापहारिणि प्रयाति सायन्तने तनीयसि निशानिःश्वासनिभे नभस्वति कन्दर्पकेतुस्तमालिकामकरन्दसहायो वासवदत्तानन-कनगरमयासीत्। अथ कटकैकदेशविरचिताभ्रंलिहशिखरेण सुधाधवलेनैकान्तर-निविष्ट-कनक-मुक्ता-मरकत-पद्मराग-शकलेन वासवदत्तादर्शनार्थमवस्थितदेवतागणेनेव शालवलयेन परिगत-मनिलोल्लासिताभिर्नभस्तरुमञ्जरीभिरिव तर्जयन्तीभिरिव गगनार्णवश्रियं पताकाभिरुपशोभमानं कनकशिलापट्टाङ्गणप्रसृताभिः

---

मयासीदित्यन्वयः। विघटमानं विकसद्दलपुटं पत्रपुटं यस्य तादृक् कुमुदकाननं तस्य कोशेषु मध्यभागेषु मकरन्दविन्दुसन्दोहः पुष्परसविन्दुसमुदायस्तेन मुदितं हृष्टं मधुकरकुलं तस्य कलरुतेन मुखरितदिगन्ते। चन्द्रिका ज्योत्स्ना तस्याः पानभरेणाल-सचकोरकामिनीभिरभिनन्दितागमने स्तुत्यागमने। चन्द्रिका कौमुदी ज्योत्स्नेत्यमरः। सुरतभरपरिश्रमखिन्नाः पुलिन्दराजस्य म्लेच्छजातिविशेषराजस्य सुन्दर्यस्तासां स्वेदक-णिकापहारिणि सायन्तने सन्ध्याकालिके। सायंचिरमित्यादिना ट्युः। तनीयसि स्वल्पेऽत एव निशानिःश्वासनिभे नभस्वति वायौ प्रयाति सति तमालिकामकरन्दौ सहायौ यस्य सः। या प्रापणे। यमरमेति सगिटौ। अथ वासवदत्ताभवनं ददर्शेत्यन्वयः। कटकैकदेशे राजधान्येकदेशे विरचितमभ्रंलिहं शिखरं यस्य तेन। वहाभ्रे लिहः इति खश्। कटकं वलये सानौ राजधानीनितम्बयोः। इति विश्वः। सुधाक्तृष्टौ तया धवलेन। एकान्तरं निविष्टानि कनकं सुवर्णं मुक्ता मरकतं गारुत्मतं पद्मराग एषां शकलानि यत्र। वासवदत्तादर्शनार्थमवस्थितदेवतागणेनेव शालवलयेन प्राकारवलयेना-नुगीतम्। प्राकारो वरणः शाल इत्यमरः। अनिलोल्लासिताभिर्नभस्तरुमञ्जरीभिर्गगनार्ण-वश्रियं तर्जयन्तीभिरिव पताकाभिरुपशोभितम्। पताका वैजयन्ती स्यादित्यमरः। कनक-शिलापट्टाङ्गणेषु प्रसृताभिः। जलयन्त्रविशेषैरिति भावः। फोहारा इति चद्दर इति वा भाषायाम्। पाटङ्गणेति परसार इति भाषायां प्रसिद्धः। कर्पूरकुङ्कुमचन्दनैस्तालवृन्तानां गन्धो यत्र तादृगुदकं तत्परिमलसंवाहिनीभिर्वाहिनीभिर्नदीभिः। प्रसृ[illegible]स्फाटिक-

कर्पूरकुङ्कुम-चन्दनैलालवङ्गगन्धोदक-परिमल-वाहिनीभिर्वाहिनी-
भिरज्ञाततटस्फाटिकपट्टसुखनिषण्णनिद्रायमाणप्रासादपारावताभिः
प्रभ्रश्यत्तटनिकटविटपिकुसुमस्तवकितसलिलाभिरनवरतमज्जदु-
न्मज्जन्मदयुवतिजनघनजघनस्फालनोच्छलच्छीकरनिकरस्नपितवे-
दिकाभिः कर्पूरपूरविरचितपुलिनतटनिविष्टनिनदानुमीयमानरा-
जहंसीभिर्विकचनीलोत्पलकाननदर्शिताकाण्डचक्रवाकतिमिरश-
ङ्काभिर्युवतिभिरिव सुपयोधराभिः सुग्रीवयुद्धकलाभिरिव कीला-
लस्नपितकुम्भकर्णाभिः सागरकूलभूमिभिरिव सुन्दरीपादपराग-
शबलाभिर्नवनृपतिचित्तवृत्तिभिरिव कुल्यापमानकारिणीभिरने-

---

पट्टेषु सुखेन निषण्णा अत एव निद्रायमाणाः प्रासादपारावता यासु। निश्चलत्वमज्ञाने निश्चलत्वे च निद्रा तस्यां सुखोपवेशनं हेतुरिति कारणमालालङ्कारः। प्रभ्रश्यद्भिस्तटवि-टपिकुसुमैर्मञ्जरीरचपुष्पैः स्तवकितं सञ्जातस्तवकं सलिलं यासाम्। अनवरतमज्जदुन्मज्जन्मदयु-वतिजनस्य घनजघनास्फालनेनोच्छलच्छीकरनिकरेण स्नपितार्द्रीकृता वेदिकावितर्दिः प्राङ्गणादौ कृतमुपवेशनं स्थानं याभिर्यासां वा ताभिः। स्याद्वितर्दिस्तु वेदिकेत्यमरः। कर्पूरपूरेण विरचितं यत् पुलिनं तस्य तटे समीपदेशे निविष्टा उपविष्टा निनदैर्वासि-तैरनुमीयमाना राजहंस्यो यासु ताभिः। भाक्तोऽत्र पुलिनप्रयोगः। प्रमाणालङ्कारेष्वनु-मानालङ्कारः। कर्पूरपुलिनवर्णनेन सम्पत्तेरपरिमेयत्ववर्णनात् उदात्तालङ्कारोऽप्यत्र, तथाच दण्डी। आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमम्। उदात्तं नाम तं प्राहुरलङ्कारं मनीषिणः। इति। विकचमित्यादि। रक्तोत्पलपाठपक्षे रात्रौ विकासासम्भवात्। नीलोत्पलपाठपक्षे चक्रवाकाणामेव तिमिरशङ्कावर्णनानुपयोगादुपेक्ष्यम्। युवतिभि-रिव तरुणीभिरिव यूनस्तिरिति तिः। सुपयोधराभिः शोभनस्तनीभिः। पक्षे धर-तीति धरा। पचाद्यच्। पयसो जलस्य धराभिः। तरुणी युवतिः समे। स्त्रीस्तनाब्दौ पयोधराविति द्वयोरमरः। सुग्रीवयुद्धकलाभिरिव कीलालेन रक्तेन स्नपितः कुम्भकर्णो राक्षसो याभिः। पक्षे कीलालेन पयसा स्नपितः कुम्भस्य कलशस्य कर्णोऽग्रो याभिः। शोणितेऽम्भसि कीलालमिति पदद्वयेऽमरः। सागरस्य कूलभूमिभिरिव तीरभूमिभिरिव सुन्दरीपादपानां रागैः शबलाभिः। पक्षे सुन्दरीणां पादपरागैश्चरणरेणुभिः शबलाभिः। सुन्दरी तरुभिन्नारीभिदोः स्त्री रुचिरेऽन्यवत्। नवोऽचिरप्राप्तराज्यपदो नृपतिस्तच्चित्त-

कतराभिरुपशोभितं शिखरगतमुक्ताजालव्याजेन पुरयुवतिजन-दर्शनकुतूहलागतं तारागणमिवोद्वहद्भिरुपान्तनिलीनाभिः काच-कलशाकृतिमुद्वहन्तीभिः शिखिसंहतिभिरुद्भासितैः प्रासादैरुप-शोभितं क्वचिदनवरतदह्यमानकृष्णागुरुधूमपटलैर्दर्शिताकालजल-दोदयं क्वचिदतिगम्भीरमुरजरवाहूतसानन्दनर्तितनीलकण्ठं सायन्तनसमयमिव पतितलोकलोचनं जनकयज्ञस्थानमिव दारोत्सुकरामं मानुष्यकमिवाभिनन्दितसुरतं निधानमिव कौतुकस्य वासमिव शृङ्गारस्य कुलगृहमिव विभ्रमस्य सङ्केतस्थानमिव सौन्दर्यस्य वासवदत्ताभवनं भवनन्दनप्रभावो

---

द्गतिभिरिव। कुल्यस्य कुले साधोस्तव साधुरिति यत् तस्यापमानकारिणीभिः। पित्रादेर-मात्यादयः शिग्रुत्वान्नव्यत्वाद्वा नैनमतिमनुत इति तेषामपमानः। पक्षे कुल्यानां कृति-माल्पसरितामपमानकारिणीभिः। कुल्याल्पा कृत्रिमा सरिदित्यमरः। अनेकतराभिर्वल्ली-भिरुपशोभितम्। शिखरगतानां पक्षिप्रवेशवारणार्थमुपरिबद्धानां मुक्ताजालानां मुक्ताम-यानायानां व्याजेन पुरयुवतिजनस्य कुतूहलं कौतुकं तद्दर्शनार्थमागतं तारागणमिवोद्वहद्भिः। कुतुकं च कुतूहलम्। जालं समूह आनायो गवाक्षचारकावपि। इत्युभयत्रामरः। उपान्ते निलीनाभिर्नितरां लीनाभिर्निश्चलतया स्थिताभिरत एव काचकलशाकृतिमुद्वहन्तीभिः शिखिसंहतिभिर्मयूरयूथैरुद्भासितैः प्रासादैरुपशोभितम्। क्वचिदनवरतदह्यमानकालागु-रुधूमपटलैर्दर्शितमकाले जलदानां मेघानामुदयो येन यत्र वा। अत एव क्वचिदतिगम्भीर-मुरजरवाहूताः सानन्दं नर्तिता नीलकण्ठा बर्हिणो यत्र। रात्रौ मयूरनृत्यवर्णनं तिर्यञ्चोऽपि सर्वकालं सुखिनो मनुष्याणां तु का कथेति ध्वनयितुम्। मृदङ्गा मुरजाः। मयूरो बर्हिणो बर्ही नीलकण्ठ इति द्वयोरमरः। सायन्तनसमयमिव पतितः लोकलोचनः सूर्यो यत्र। किरणमालिविलोचनहितय इति हारावली। पक्षे पतितानि सौन्दर्यावलोकनार्थं लोकानां लोचनानि यत्र। जनस्थानमिव दारेषु सीतायामुत्सुको रामो राघवो यत्र। पक्षे दार-यतीति दारः कन्दर्पस्तेनोत्सुका रामाः स्त्रियो यत्र। सुन्दरी रमणी रामेत्यमरः। मानु-ष्यकमिव मनुष्यसमूह इवाभिनन्दिता श्लाघाविषयीकृता सुरता देवत्वं येन। पक्षेऽभिन-न्दितं सुरतं मैथुनं यत्र। कौतुकस्य निधानगृहं भाण्डागारमिव शृङ्गारस्य वासगृहमिव। पुंसः स्त्रियां स्त्रियाः पुंसि सम्भोगं प्रति या स्पृहा। स शृङ्गार इति ख्यातः क्रीडादि-

ददर्श। द्रवसि द्रवसिद्धितो निगलिते चपला चपलायते किमेषा स्तबकस्तव कर्णतः पतितोऽयं सुरेखे! सुरया चिता सुरयाचितश्रीस्त्वमसि मत्ता कलहे! कलहेमकाञ्चिदामक्वणितैः स्मरमिवाह्वयसि मलये! मलयेप्सितं दृशैवाधिगतासि कलिके! कलिकेतुमिमां मुखरां मुञ्च मेखलां शृणुमः कलवल्लकीरुतं मेखला मे खला न भवति त्वमेव मुखरतया मुखरतया च त्रप-

---

रसकारणम्॥ इत्युक्तमन्यत्र। विभ्रमस्य विलासस्य कुलगृहमुत्पत्तिस्थानम्। कामोत्सुक्यकृताकारं रूपयौवनसम्पदा। अनवस्थितचेष्टत्वं विभ्रमः परिकीर्तितः॥ इति भरतः। भवनन्दनस्य कार्तिकेयस्येव प्रभावो यस्य सः। इत्यन्योन्यप्रणयेन पेशला रम्याः प्रमदानामालापकथाः शृण्वन् कन्दर्पकेतुर्मकरन्देन समं विस्मयमाश्चर्यमकरोत्। द्रवसिद्धितो नर्मसिद्धितः सार्वविभक्तिकस्तसिः। निगलिते डलयोरैक्यान्निगडिते द्रवसि द्रुतगतौ। वहस्य गमनप्रयास उपहासाय अफलत्वादिति काचिदुपहसति। यद्वा मया प्रेम्णा बद्धासि त्वं मां परित्यज्य यासीत्युपालम्भः। द्रवो विद्रवनर्मणोः। आसवे सरगत्योश्चेति हैमः। यद्वा निगलिते एतदभिधाने द्रवसिद्धितो द्रावकौषधिविशेषाद्द्रवसि। यद्यप्यष्टगुणः स्मरो निगदितः पुंसोऽङ्गनानां सदा नो याति द्रवतां तथापि झटिति व्याश्वासिता सङ्गमे। तत् स्याद्भेषजसम्प्रयोगविधिना सङ्गपतौ द्रावणम्। इति रन्तिदेवः। यथोक्तं द्रवसीति तां लक्षीकृत्यान्यां प्रत्याह। एषा पुरोवर्तिनी चपला चपलाभिधाना किं चपलेव विद्युदिवाचरति। नाम्नैव गतार्थत्वादिति भावः। यद्वैषा चपला चञ्चला। किञ्चान्यश्च पलायते। इण् गतौ उपसर्गस्यायताविति लत्वं परारेफस्य। यद्वा चपलेव पिप्पलीवाचरति। इयमेवौषधिः। सर्वथा द्रवतीति भावः। चपला कमला विद्युत्पुंश्चलीपिप्पलीषु च। इति विश्वप्रकाश इति दिक्। हे सुरेखे तव कर्णतः स्तवकः पुष्पगुच्छोऽयं पतितः। त्वं न जानासि। मत्तासीत्युपहासः। स्याद् गुच्छकस्तु स्तबक इत्यमरः। एनामेवोपहसति सुरैर्देवैर्याचिता। अर्थाद्ब्रह्मण उचिता योग्या श्रीः सौन्दर्यश्रीर्यस्यास्तादृशी त्वम्। सुरया मदिरया चिता व्याप्ता तादृशी सती मत्तासि। हे कलहे कलहेमकाञ्चीदामक्वणितैः स्मरमाह्वयसीवाकारयसीव। पत्यतिरिक्तपुरुषाह्वानोत्प्रेक्षणमुपहासाय। एनामुपहसति। मलये तन्नामिके। मे शिवे लयो मार्गो यस्य मलयः। कामकदृशोप्सितं हृदां दृशैव दृशाऽवाधिगतामि त्वं पुरुषं कटाक्षैरामन्त्रयसीति भावः। अभीष्टेऽभीप्सितं हृद्यमित्यमरः। यद्वा मः शिवो लयो

तेऽत्र पतेदियमवन्तिसेना कुसुमोपहारे मुग्धा तव कैतवैरलं लवङ्गिके! वेपथुरेवाशयं व्यनक्ति वहतीव हतीरनङ्गलेखे! स्मरसायकानां तव वपुरलसं पिहितापि हिताय त उत्कलिकाम-होर्मिर्वदने वद नेत्रपेयकान्तौ किमुपमानमिन्दुरप्युपयाति व्रस-तीव सतीव्रते! तव हृदि कोऽपि शतधा शतधारसारा वाच-स्तवानुभूताः कुन्तलिके! करकाकरकालमेघखण्डतुलामय-

---

गर्हं यस्य मलयश्चन्द्रस्तस्येप्सितं हरिणस्तं दृष्ट्यैवाधिगतासि। मृगलोचनासीति भावः। कः शिवश्चन्द्रमा वेधा इत्यनेकार्थध्वनिमञ्जरी। कलिके कलौ रतिकलहस्य केतुं ध्वजम्। यथा केतुना सेनादि द्योत्यते। एवमनया रतिकलहो द्योत्यत इति भावः। मुखरां वाचालां मेखलां काञ्चीं मुञ्च। त्यागे फलमाह। कलमव्यक्तमधुरं च तद्रणितं तत्र मग्नः। कलिः स्यात् कलहे सूरे कलिरन्त्ययुगे युधि। इति विश्वप्रकाशः। उत्तरयति। मम मेखला काञ्ची खला पिशुना न भवति। सुखेन प्रेम्णा रतं यातीति सुखरतया। यद्वा सुखेन वात्स्यायनाद्युक्तोपायेन रतं यातीति सुखरतया। त्वमेव सुखरतया वाचालतया खला। सुखमुपाये प्रारम्भे प्रेष्टे निस्सरणाम्बयोः। इति हैमः। पिशुनो दुर्जनः खल इत्यमरः। काचिदाह। मुग्धेयमवन्तिसेना तयते तत्रतेऽत्र कुसुमोपहारे। पतेत्। सम्भावनायां लिङ्। तां प्रत्याह। लवङ्गिके कैतवैरलं कैतवमात्रं नास्तीत्यर्थः। वेपथुरेव कम्प एव तवाशयं व्यनक्ति। सात्त्विकाविर्भावात् त्वमेव कम्पसे मां किं वृथा वदसीति भावः। स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः। वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः। अनङ्गलेखे तव वपुः कर्तृ स्मरसायकानां हतीर्हननानि। हन् हिंसागत्योः क्तिन्। वहतीव यतोऽलसम्। उत्तरमाह। तेऽनु-त्कलिकामहोर्मिः पिहिता छन्ना हिताय। विरहस्यानाविष्कारादयोगात् ते हिताय कल्याणाय। यद्वोत्कलिकामहोर्मिः पिहितापि हितवदाचरति हितायते। यद्वोत्क-लिकामहोर्मिः पिहितापि हि निश्चयेन तायते लोकोपहासात् त्वां पालयतीत्यर्थः। तायृ सन्तानपालनयोः। सन्तानः प्रबन्धः। यद्वा पिहिताप्युत्कलिकामहोर्मिः कर्मकर्तृ तायते स्वयमेव विस्तृता भवति। हिः प्रसिद्धौ। तनु विस्तारे। तनोतेर्यकीति विलापात्वम्। यद्वोत्कलिकामहोर्मिः पिहितापि हिता वृद्धा। हि गतौ वृद्धौ च। अयते लोके गच्छति प्रसृता भवति। हि नेत्रैः पेया कान्तिरस्य तस्मिन् वदने मुखे किमिन्दुरुपमानमपि यातीति वद। पूर्वं त्वन्मुखमुपमानमिदानीमिन्दुरूपमानमपि यातीति सम्भावनम्। मुखे विरहा-तिशयात् पाण्डुत्वाधिक्यद्योतनाय। उत्तरमाह। सतीनां व्रतमिव व्रतमस्यास्तत्सम्बोधनम्।

मुल्लसितोत्फुल्लमल्लिकामालभारी कुन्तलकलापः तव याति केरलिके ! पुरगोपुरगोचराः श्रूयन्ते गीतध्वनयः किमिव कल्पयसि क्षणमीक्षणमीलनादपि चटुलं चटुलम्पटं सखीजनमायासयसि मुरलिके ! स्तनता स्तनताडनेषु यत् सौख्यं तल्लब्धं स्मरता स्मरतापनोदनं दयितेन दयितेन विमुक्तासि किं मुह्यसि महतो महतो दयितो दयितः स्मरति स्म रतिप्रियं तव कौशलं नवनिशानखराणां नखराणां व्रणः स्मरजन्यां स्म रजन्यां कुरुते न

---

तव हृदये कोऽपि वसतीव । शतधा शतप्रकारेण शतधारोऽशनिस्तत्काराः वज्रपर्यायास्तव वाचोऽनुकृताः । शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः । इत्यमरः । कुन्तलिके उल्लसितोत्फुल्लमल्लिकामालभारी तवायं कुन्तलकलापः करकाणां वर्षोपलानामाकरो यः कालमेघखण्डः तस्य तुलां साम्यं याति प्राप्नोति । वर्षोपलस्तु करकेत्यमरः । मालभारीत्य- ष्टकेषीकामालानामिति ह्रस्वः । पुरस्य गोपुरं द्वारं तद्गोचरा गीतध्वनयः श्रूयन्ते । गोपुरं द्वारि पुद्वारि कैवर्ते मुस्तकेऽपि च । इति मेदिनी । किमिव कल्पयति किंवा गायसि कथं वा कस्य कृते वेति किं कल्पयसि सर्वं स्पष्टतयैव ज्ञायत इति त्वदर्थमेवेत्युपहासः । हे मुरलिके क्षणं कालाध्वनोरत्यन्तसंयोगे द्वितीया । ईक्षणमीलनाद्दृष्टिमीलनाच्चटुलं चञ्चलं कार्येऽनलसम् । चटुलम्पटमपि प्रियवाक्यामकमपि सखीजनमायासयसि । त्वमपि विरहवेदनया मूर्छितास्मान् वेदयसीति भावः । दयितेनाभीष्टेन स्तनता भणितं कुर्वता सशब्दं पत्न्यादिशब्दं कुर्वता वा स्तनमण्डलेषु सुरते चन्द्रकलानखक्षतेषु । यत् स्मरतापनोदनं स्मरतापनाशकं सौख्यं लब्धं तत् स्मरतापि दयितेन कथं विमुक्तासि । दयितः स्वामिकान्तयोरिति धरणिः । एतादृशं ताडनं मत्वाऽसौ नीत को वेद तवापराधमिति ध्वनिः । अतएव वदति किं मुह्यसि पुनरेव कृतं पत्येत्यभिप्रायः । यद्वा समाश्वासयति किं मुह्यसि स त्वद्गुणामकस्मान्न त्यक्ष्यति । पूर्वं वर्णितमपि गुणं तत्प्रत्ययार्थं पुनर्वर्णयति । महतो महीयसो महतमुद्रतिरूपान् महोत्सवाद्धतमोहतकः । इतो यया कयाचिद्रतविधानरूपो मोदो यस्य सः । ततोऽतिशये तमप् । दयितः कान्तो दयितः पतिः । रतौ सुरते प्रियं तव कौशलं स्मरति स्म स्मृतवान् । लट् स्मे इति भूते लट् । हे कुरुते नवं निशानं तेजनं तेन खराणां नखराणां नखानां व्रणः क्षतं स्मरस्य जनौ यथ रतिस्तस्यां रतौ स्मरं जनयतीति कर्मण्यण् । जनिवध्योश्चेति वृद्धिनिषेधः । ङीप् तस्यां कामोद्दीपिकायां वा रजन्यां रात्रौ रुजं पीडां किं ते न कुरुते स्म । पूर्ववल्लट् । शान तेजने । यद्वा स्मरेण जन्या कामिनी-

कुरुते रुजं किं ते लोचनाभ्यां लोचनाभ्यां प्रीणिताखिलजनेक्षणदेशः क्षणदेशः किं न पीयते प्रियसखि मदमालिनि ! बिम्बाधरसङ्गत्या सङ्गत्यागच्छया विरागं कुरु मधुमदारुणमालवीकपोलतलसमानो लसमानो रक्तमण्डलतया लतया त्वया विशेषः कः कुरङ्गिके ! कल्पय कुरङ्गशावकेभ्यः शष्पाङ्कुरं किशोरिके ! कारय किशोरकेभ्यः प्रत्यवेक्षां तरलिके ! तरलय कृष्णागुरुधूपपटलं कर्पूरिके ! पाण्डुरय कर्पूरधूलिभिः पयोधरभारं मातङ्गिके ! मानय मातङ्गशिशुयाचनां शशिलेखे ! लिख ललाटपट्टे

---

त्पादिता तां रुजं चन्द्रकलानुरोधेन नखक्षतादयो नारीणां कामसन्दीपयन्तीति स्पष्टं कामतन्त्रे । भव्यगेयेति साधुः । जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान् । विषत्पाद्यजनितोऽथ । इति विश्वमेदिन्यौ । स्त्री रुग् रुजा चोपताप इत्यमरः । कापि मानिनीं प्रति छलेन वक्ति । हे मदनमालिनि लोचनाभ्यां प्रीणितोऽखिलजनानामीक्षणदेशो नेत्रदेशो येन सः । क्षणदेशश्चन्द्रः किं न पीयते । विध्यलङ्कारः । सिद्धस्यैव विधानं यत् तामाहुर्विध्यलङ्क्रियाम् । लोचनयोर्लोचनविधानं चन्द्रदर्शनेन साफल्यद्योतनाय । नात्यद्भुत रागेयं स्वयमेव प्रियमनुनेष्यतीति भावः । यद्वा लोचनाभ्यां नेत्राभ्यां प्रीणिताखिलजनेक्षणदेशः । क्षणदः सुखदस्तामावीक्ष्य स पतिः लोचनाभ्यां किं न पीयते रक्तमण्डलतया लसमानोऽतएव मधुमदारुणमालवीकपोलतलसमानः । पक्षे रक्तमण्डलतयानुरक्तमण्डलतया लसमानः शोभमानो मालवीकपोलतलसमानता रक्तमण्डलतया । बिम्ब एव बिम्बवद्वाधरस्तत्सङ्गत्या लतया त्वया को विशेषो न कोऽपीत्यर्थः । अतः सङ्गत्यागेच्छया विरागं कुरु । यथा क्षणदेशस्यौषधीशत्वे नाविरोधो लतयैवं नैकविधवाजीकरणार्थौषधीशत्वेन क्षणदेशेन तवाप्यविरोध उचित इति भावः । कुरङ्गिक इत्यादीनि सखिसम्बोधनानि । कुरङ्गशावकेभ्यो हरिणशिशुभ्यः शष्पं बालतृणं कोमलं तदङ्कुरं कल्पयोत्पादय देहि । मृगे कुरङ्गवातायु । पृथुकः शावकः शिशुः । शष्पं बालतृणं घासः । अङ्कुरोऽभि नवोद्भिदि । इति चतुर्ष्वमरः । किशोरकस्याश्ववालकस्य प्रत्यवेक्षामवेक्षणम् । बालः किशोर इत्यमरोऽश्वप्रकरणे । अवेक्षा प्रतिजागर इति च तरलय विस्तारय । कान्यतिविरहाकुलाह । कर्पूरिके कर्पूरधूलिभिः पयोधरभारं पाण्डुरय । अन्याह । मातङ्गिके मातङ्गशिशुयाचनां मानयाङ्गीकुरु । पुनः पुनः करचालनेन कुचौन्नत्यं कुम्भयोः प्रार्थयत इति भावः । शशिलेखे

शशिलेखां केतकिके ! सङ्केतय केतकीमण्डपस्य दोहदं शकुनिके ! देहि क्रीड़ाशकुनिभ्य आहारं मदनमञ्जरि ! मञ्जरय सभामण्डपकदलीगृहं शृङ्गारमञ्जरि ! सङ्कल्पय शृङ्गाररचनानि सञ्जीविके ! वितर जीवञ्जीवकमिथुनाय मरिचपल्लवं पल्लविके ! पल्लवय कर्पूरधूलिभिः कृत्रिमकेतकीकाननं सहकारमञ्जरि ! मञ्जनय सहकारसौरभं व्यजनवातेन मदनलेखे ! लिख मदनलेखं मलयानिलस्य मृणालिके ! देहि मृणालाङ्कुरं राजहंसशावकेभ्यो विलासवति ! विलासय मयूरकिशोरं तमालिके !

---

ललाटपट्टे शशिलेखां लिख । स्मरनिर्भीषिकार्थमिति भावः । केतकिके केतकीमण्डपस्य दोहदं सङ्केतय जानीहि । कथय विद वा । दोहदो गर्भलक्षणं । अभिलाषे तथा गर्भे इति हेमः । शकुनिके क्रीड़ाशकुनिभ्य आहारं देहि । घ्वसोरेद्धावभ्यासलोपौ । मदनमञ्जर्युत्पादि । शृङ्गारमञ्जरि शृङ्गाररचनानि सङ्कल्पयोत्पादय । सञ्जीविके जीवञ्जीवकाय मरिचपल्लवं वितर देहि । जीवञ्जीवश्चकोरकः । मरिचं कोलकं कृष्णमित्यमरहैमौ । पल्लविके कृत्रिमकेतकीकाननं कर्पूरधूलिभिः पल्लवय । सहकारमञ्जरीति । मदनलेखे मलयानिलस्य मदनलेखं मदनावस्थासूचकं लेखं लिख । मृणालिक इति । विलासवति मयूरकिशोरं विशेषेण लासय नर्तय । किशोरस्तरुणेऽश्वे इति धरणिः । तमालिके मलयजरसेन चन्दनरसेन भवनवाटं गृहमार्गं परिमलय । वाटः पथश्च मार्गश्चेति त्रिकाण्डशेषः । काञ्चनिके काञ्चनमण्डपिकायां कस्तूरीद्रवं विकिर विक्षिप । कॄ विक्षेपे । प्रवालिके घुसृणरसेन कुङ्कुमरसेन प्रवालानां प्रकृष्टकेशानां काननं समूहं सेचय । कुङ्कुमं पीतकावेरं घुसृणं कुसुमात्मकम् । इति हारावली । प्रविश्य वासवदत्तां ददर्शेत्यन्वयः । व्याकरणेनेव पाणिनिप्रोक्ताष्टाध्यायीरूपेणेव तेन रक्तं रागादित्युपलक्षितः पादोऽध्यायतुरीयांशस्तल्लक्षितेन । पक्षे रक्तपादेन लोहितचरणेन सह सरक्तपादं तेन । भारतेनेव सुपर्वणा शोभनपरिच्छेदयुतेन । पक्षे सुपर्वणा शोभनग्रन्थियुतेन । ग्रन्थिर्ना पर्वपरुषी इत्यमरः । रामायणेनेव सुन्दरकाण्डेन चारुणा । पक्षे सुन्दरकाण्डवता चारुणा । काण्डं नाऽस्त्री वाणे नाले स्कन्धे च शाखिनाम् । स्तम्बे रहसि वर्गे चेति धरणिः । जङ्घायुगलेन विराजमानां विन्ध्यगिरिश्रियमिव सुनितम्बां सुन्दरकटकाम् । कटकोऽस्त्री नितम्बोऽद्रेरित्यमरः । पक्षे शोभनकटिपश्चाद्भागां पश्चान्नितम्बः स्त्रीकट्या इत्यमरः । छन्दोविचितिमिव भ्राजमानतनु-

परिमलय मलयजरसेन भवनवाटं काञ्चनिके! विकिर कस्तूरीद्रवं काञ्चनमण्डपिकायां प्रवालिके! सेचय घुसृणरसेन बालप्रवालकाननमित्यन्योन्यं प्रणयपेशलाः प्रमदानामालापकथाः शृण्वन् कन्दर्पकेतुर्मकरन्देन सह विस्मयमकरोत्। मनस्यहो भवनानामतिशायि सौन्दर्य्यमहो शृङ्गारकलाकेलिकौशलं तथाप्ययं तत्काललीलाबहलविरलविमलमालवीदशनकान्तिकान्तिदन्तिदन्तघटितो मण्डपोऽसावपि कनकशलाकाविनिर्मितयन्त्रपञ्जरसंयतः क्रीड़ाशुक इत्यादि परिचिन्तयन् प्रविश्य व्याकरणेनेव सरक्तपादेन भारतेनेव सुपर्वणा रामायणेनेव सुन्दरकाण्डचारुणा जङ्घायुगलेन विराजमानां छन्दोविचितिमिव भ्राजमानतनुमध्यां नक्षत्रविद्यामिव गणनीयहस्तश्रवणां न्यायस्थितिमिवोद्योतकर-

---

मध्याम्। तनुमध्याभिधं छन्दः। त्यौ स्त्स्तनुमध्या। पक्षे भ्राजमानं तनुमध्यं यस्याः। नक्षत्रविद्या ज्योतिःशास्त्रमिव गणनीयं हस्तो हस्तर्क्षं श्रवणं श्रवणर्क्षं च यत्र। पक्षे गणनीयमत्युत्कृष्टतया हस्तश्रवणं यस्याः। न्यायस्थितिमिवोद्द्योतकर आचार्यो न्यायवार्त्तिककृत् तत्स्वरूपां तदात्मिकाम्। विद्यातद्वतोरभेदविवक्षाव त्रिमुनि व्याकरणमितिवत्। भेदविवक्षायां तु। उद्द्योतकरेण स्वरूपं यस्याः। उक्तानुक्तदुरुक्तचिन्ताकृता वार्त्तिककृता स्वरूपं यथा प्रतिपादितरूपम्। नतु खण्डितं भ्रष्टमित्यर्थः। पक्षे उद्द्योतकरं प्रकाशकरं स्वरूपं यस्याः। प्रकाशो द्योत आतप इत्यमरः। बौद्धसङ्गतिमिवालङ्कारो धर्मकीर्त्तिकृतो ग्रन्थविशेषस्तेन भूषिताम्। पक्षेऽलङ्कारो भूषणं तेन भूषिताम्। उपनिषदमिवैकमानन्दमद्वितीयं ब्रह्मानन्दमुद्द्योतयन्तीम्। तदुक्तम्। आनन्दो ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम्। इति। पक्ष एकमुत्कृष्टमानन्दमाह्लादम्। द्विजकुलस्थितिमिव चारु सुन्दरं चरणमाचारो यस्यास्ताम्। पक्षे चारु रम्यं चरणं यस्याः। चरणोऽस्त्री बहृचादौ मूले गोत्रे पदेऽपि च। तारामिव बृहस्पतिभार्यामिव गुरुकलत्रयोपशोभिताम्। पक्षे बृहच्छ्रोणितयोपशोभिताम्। कलत्रं श्रोणिभार्ययोरित्यमरः। शतकोटियष्टिमिव वज्रयष्टिमिव मुष्टिग्राह्यो मध्यो मध्यदेशो यस्याः पक्षे मध्यमवलग्नं यस्याः। मध्यमं चावलग्नं च मध्योऽस्त्रीत्यमरः। प्रियङ्गुश्यामासखीमिव प्रियदर्शनां तन्नामिकाम्। पक्षे

स्वरूपां बौद्धसङ्गतिमिवालङ्कारभूषितामुपनिषदमिवानन्दात्मक-मुद्योतयन्तीं द्विजकुलस्थितिमिव चारुचरणां विन्ध्यगिरिश्रिय-मिव सुनितम्बां तारामिव गुरुकलत्रतयोपशोभितां शतकोटि-मिव मुष्टिग्राह्यतनुमध्यां प्रियङ्गुश्यामासखीमिव प्रियदर्शनां ब्रह्मदत्तमहिषीमिव सोमप्रभां दिग्गजकरेणुकामिवानुपमां वेला-मिव तमालपत्रप्रसाधितामश्वतरकन्यामिव मदालसां वासव-दत्तां ददर्श। अथ तां प्रीतिविस्फारितेन चक्षुषा पिबतः कन्द-र्पकेतोर्जहार चेतनां मूर्च्छावेगः। तमपि पश्यन्ती वासवदत्ता मुमूर्च्छ। अथ मकरन्दसखीजनप्रयत्नलब्धसञ्ज्ञौ तावेकासन-मलञ्चक्रतुः। ततो वासवदत्तायाः प्राणेभ्योऽपि गरीयसी सर्व-विस्रम्भपात्रं कलावती नाम कन्दर्पकेतुमुवाच। आर्य्यपुत्र!

---

प्रियं दर्शनं यस्यास्ताम्। ब्रह्मदत्तमहिषीमिव सोमप्रभां तदभिधानाम्। पक्षे सोम-स्येव चन्द्रस्येव सोमा रम्या वा प्रभा यस्यास्ताम्। सोमो मनोहरे चन्द्र इति विश्वः। दिग्गजः कुमुदस्तत्करेणुकामिवानुपमां तदाख्याम्। करिण्योऽभ्रमुः कपिला पिङ्गला-ऽनुपमा क्रमात्। इत्यमरः। पक्षेऽनुपमामुपमारहिताम्। वेलामिव समुद्रतीरभूमिमिव तमालपत्रैः प्रसाधितामलङ्कृताम्। पक्षे तमालपत्रं तिलकं तेन प्रसाधिताम्। तमाल-पत्रं तिलकचित्रकाणीत्यमरः। अश्वतरकन्यामिव मदालसां तन्नामधेयाम्। पक्षे मदेन यौवनजन्येनालसां मन्दगतिम्। अथेति स्पष्टम्। मकरन्देन तत्कृतोपचारेण सखी-जनेन तत्कृतोपचारेण यथाक्रमं लब्धसंज्ञौ तौ वासवदत्ताकन्दर्पकेतू एकमभिन्नमासनम-लञ्चक्रतुः। तत इति। विस्रम्भपात्रं विश्वासस्थानम्। आर्यपुत्रेति। आर्यपुत्रेति सम्बोध्यः पतिः पत्नीजनेन वा। इति भरतः। त्वत्कृते त्वदर्थमनया वासदत्तया या या वेदना अनुभूता सा सा यदि नभ आकाशः पत्रवदाचरति। उपमानादाचार इति क्यङ्। पत्रायते। अति-वैपुल्यार्थमिदमुक्तम्। सागरो मेलानन्दायते मसीपात्रायते। गाम्भीर्यार्थं चेदम्। मेलानन्दो मसीपात्रमिति हारावली। लिपिकरो लेखकः। दिवाविभेति टः। ब्रह्मायते चिरजीवि-तार्थमिदम्। कथको वक्ता भुजङ्गराजायते भुजङ्गराजशेषायते। योगशास्त्रप्रणेतृत्वे नान्तर-भावाभिज्ञत्वार्थम्। शब्दशास्त्राणामपारावारीणत्वं न सहस्रमुखत्वं न बहुधाभिप्रायाविष्कारक-

नायं विस्रम्भकथाया अवसरस्ततो लघुतरमेवाभिधीयसे। त्वत्कृते यानया वेदनानुभूता सा यदि नभः पत्रायते सागरो मेलानन्दायते ब्रह्मायते लिपिकरो भुजगराजायते कथकस्तदा किमपि कथमप्यनेकैर्युगसहस्रैरभिलिख्यते कथ्यते वा। त्वयापि राज्यमुज्झितं किं बहुना। आत्मा सङ्कटे समारोपित एव। एषास्मत्स्वामिदुहिता पित्रा प्रभातप्रायायां रजन्यां यौवनातिक्रान्तिदोषशङ्किना हठेन विद्याधरचक्रवर्तिनो विजयकेतोः पुत्राय पुष्पकेतवे पाणिग्रहणेन दातव्येति। अनयाप्यालोचितमद्य यदि तं जनमादाय तमालिका नागच्छति तदावश्यमेव मया हुतवहे शयितव्यमिति। तदस्याः सुकृतवशेन महाभागेमां भूमिमनुप्राप्तः। तदत्र यत् साम्प्रतं तत्र भवानेव प्रमाणमित्युक्त्वा विरराम। अथ कन्दर्पकेतुर्भीतभीत इव सप्र-

---

र्थत्वार्थम। वैद्यकशास्त्राचार्यत्वेन विरहवेदनयास्या इयमवस्था न ज्वरादिजन्येति वक्तृतार्थं चेदम्। तथा चोक्तम्। योगेन चित्तस्य पदेन वाचां मलं शरीरस्य तु वैद्यकेन। योऽपाकरोत् तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि ॥ इति । तदा कथमप्यनेकैर्युगसहस्रैः कथ्यतेऽभिलिख्यते वा। सम्भावनालङ्कारः । सम्भावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये। इति लक्षणात्। त्वयेत्यादि। पाणिग्रहणं विवाहः। अनया वासवदत्तयालोचितं चिन्तितं यदभ्यर्हितं तल्लक्षणं जनं हुतवहे वह्नौ शयितव्यं प्रवेष्टव्यं महान् भागो भाग्यं यस्य तत्सम्बोधनम। भागो भाग्यैकदेशयोरिति विश्वः। साम्प्रतं युक्तं प्रमाणमुत्तरकर्तव्यतायामित्यर्थः। अथ सखीवाक्यश्रवणोत्तरमानन्दसागरलहरीभिराप्लुतः कन्दर्पकेतुर्भीतभीत इवाननुभूतपुरुषसङ्गेयं मा कदाचिदुद्विग्नाभूत् तथा सति रसभेदः स्यादिति सभय इवेत्यर्थः। सप्रश्रयं सविश्वासं वासवदत्तया सम्मन्त्र्य सख्याः कामचारानुज्ञां विधाय तया सह रतिं कृत्वेत्यर्थः। सम्पूर्वो मन्त्रिः कामचारानुज्ञार्थकः। वार्त्तान्वेषणाय मकरन्दं तत्रैव नगरे नियुज्य भुजङ्गेनेव सदागतिर्वायुस्तदभिमुखेन। पक्षे सदा सर्वदा गत्यभिमुखेन मनोजवनाम्ना तुरगेण तया वासवदत्तया सह नगरान्निर्जगाम। दुर्गगमनादौ स्त्रीणामनधिकारात्। अत्र सहयुक्तेऽप्रधान इत्यप्रधाने तृतीया। क्रमेण श्मशानवाटेन निमेषमात्रादनेकयोजनं

अथमानन्दसागरलहरीभिराप्लुत इव भुवनत्रयराज्याभिषिक्त इव इव वासवदत्तया सह सम्मन्त्र्य मकरन्दं वार्तान्वेषणाय तत्रैव नगरे नियुज्य भुजङ्गेनेव सदागत्यभिमुखेन मनोजवनाम्ना तुरगेण तया सह नगरान्निर्जगाम। क्रमेण च जाङ्गलकवलनाभिलाष-मिलितनिःशङ्ककङ्ककुलसङ्कुलेनार्द्धदग्धचिताचक्रसिमसिमायमान-विकटकटतृष्णाचटुलकटपूतनोत्तालवेतालरवभीषणेन शूलशि-खरारोपितशङ्कितवर्णकर्णनासिकच्छेदरुधिर-पटलपतितभाङ्कारि-भम्भरालीभारभरितभूमिभागबीभत्सेन कटाग्निदह्यमानापटुचट-चटत्कृकरोटीटङ्कारभैरवरवेण शूलपाणिनेव कपालावलिभस्मशि-वावह्निभूतभुजगावरुद्धदेहेन पुरुषातिशयेनेवानेकमण्डलकृतसे-वेन श्मशानवाटेन गत्वा निमिषमात्रादेवानेकशतयोजनं प्रलय-कालवेलामिव समुदितार्कसमूहां नागराजस्थितिमिवानन्तमूलां सुधर्मामिव स्वच्छन्दस्थितकौशिकां सत्पुरुषसेवामिव बहुश्री-

---

गत्वा विन्ध्याटवीं विवेशेत्यन्वयः। जाङ्गलकवलनाभिलाषेण मांसग्रासाभिलाषेण मिलितं निःशङ्कं कङ्कानां पक्षिविशेषाणां कुलं तेन सङ्कुलेन। जाङ्गलं जलदेशे स्याज्जाङ्गलं पिशितेऽपि च। इति विश्वः। अर्धदग्धचिताचक्रे सिमसिमायमान एतादृक् शब्दविशिष्टो विकटो भयानकः कटो मृतशरीरं तत्तृष्णाचटुलकटपूतनानामुत्तालवेतालानां रवेण भीषणेन कटः समयसम्येऽपि तृणेऽपि मृतकेऽपि च। इति विश्वः। शूलशिखरारोपितस्य शङ्कितवर्णस्य चोरस्य कर्णनासिकमिति प्राण्यङ्गत्वादेकवद्भावः। तच्छेदरुधिरपटले कर्णनासिकच्छेद-निर्गतरुधिरपटले पतिता भाङ्कारिभम्भराल्यो भाङ्कारोऽव्यक्तशब्दस्तद्युक्ता भम्भराल्यो मक्षिकास्ताभिर्भरितम्। इत्यजन्तो न तु क्तान्तः। पूरितं तादृग्भूमिभागेन बीभत्सेन। चोरः शङ्कितवर्णश्च कुसुमानः प्रकीर्तितः। इत्युत्तरतन्त्रम्। मक्षरा मक्षिका ज्ञेया भम्भराली च सा मता। इति हारावली। कटाग्निस्तृणाग्निस्तेन दह्यमानापटुचटचटत्कृकरोटिर्मनुष्यशिरो-ऽस्थि तस्याष्टङ्कारेण भैरवरवेण भयानकशब्दविशिष्टेन। शिरोऽस्थनि करोटिः स्त्रीत्यमरः। शूलपाणिनेव शिवेनेव। कपालावलीत्यादि। शिवा गौरी। पक्षे क्रोष्ट्री। पुरुषेष्वतिशयो यस्य स महाराजस्तेनेवानेकमण्डलं राष्ट्रम्। पक्षे श्वा तत्कृतसेवेन। प्रलयकालवेलामिव समुदितोऽर्कसमूहः सूर्यसमूहो यस्याम्। पक्षेऽर्कौ वृक्षविशेषः। अर्काङ्कवसुकास्फोत

फलाढ्यां भारतसमरभूमिमिव दूरप्ररूढार्ज्जुनां पुलोमकुल-स्थितिमिव सहस्रनेत्रोचितेन्द्राणिकां शूलपालचित्तवृत्तिमिव फलितगणिकारिकां सज्जनसम्पदमिव विकसिताशोकसरल-पुन्नागां शिशुजनलीलामिव कृतधात्रीधृतिं क्वचिद्राघवचित्तवृत्ति-मिव वैदेहीमयीं क्वचित् क्षीरसमुद्रमथनवेलामिवोज्जृम्भमाणा-मृतां क्वचिन्नारायणशक्तिमिव स्वच्छन्दापराजितां क्वचिद्वाल्मीकि-सरस्वतीमिव दर्शितेच्वाकुवंशां लङ्कामिव बहुपलाशसेवितां कुरु-सेनामिवार्ज्जुनशरनिकरपरिवारितां नारायणमूर्त्तिमिव बहु-

---

इत्यमरः। मदार इति भाषायाम्। नागराजस्थितिमिवानन्तः शेषो मूलमादिकारणमस्याः। पक्षेऽनन्तानि मूलानि यस्याम्। सुधर्मामिव देवसभामिव स्वच्छन्दं स्थितः कौशिक इन्द्रो यस्याम्। पक्षे कौशिक उलूकः। सत्पुरुषसेवामिव बहुश्रीयुक्तैः फलैराढ्याम्। पक्षे श्रीफलो बिल्वः। बिल्वे शाण्डिल्य शैलूषौ मालूरश्रीफलावपि। इत्यमरः। भारतसमरभूमिमिव दूरप्ररूढोऽर्ज्जुनः पार्थो यस्याम्। पक्षेऽर्ज्जुनो वृक्षविशेषः। इन्द्रद्रुः ककुभोऽर्ज्जुन इत्यमरः। पुलोमकुलस्थितिमिव सहस्रनेत्रायेन्द्रायोचिता योग्येन्द्राणी शची यस्याम्। नद्यृतश्चेति कप्। पक्षे सहस्रनेत्रैः सहस्रमूलैरुचिता योग्येन्द्राणी शतावरी। चारुधारा महेन्द्राणी शक्राणी जयवादिनी। इति रभसः। शूलपालो वेश्यापालो वैशिको वा तच्चित्तवृत्तिमिव फलिता सफला वैशिकेभ्यो धनलाभात् सुरतसुखलाभाद्वा। गणिकानां वेश्यानामारिकाग-तिराकारणं वा यस्यास्ताम्। ऋ गतौ धात्वर्थनिर्देशे ण्वुल्। वृद्धिः। अर्थान्तरं आङ्पूर्वः। प्रत्ययस्थादितीकारः। पक्षे गणिकारिका वृक्षविशेषः। श्रीपर्णमग्निमन्थः स्यात् कणिका गणिकारिका। इत्यमरः। जयपर्ण इति प्रसिद्धः। सज्जनसम्पदमिव विकसिता हृष्टा अशोकाः शोकरहिताः सरला उदाराः पुरुषा नागा इव। पुन्नागाः पुरुषश्रेष्ठा यस्या हेतोर्यस्यां वा ताम्। स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जरः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः॥ इत्यमरः। पक्षे विकसिताः फुल्लाः अशोकाः सरलाः पुन्नागा यस्या ताम्। पीतद्रुः सरलः पूतिकाष्ठम्। पुन्नागः पुरुषस्तुङ्गः केसरो देववल्लभः। इति द्वयोरमरः। शिशुजनलीलामिव कृता धात्र्या उपमात्रा धृतिर्यस्याः। पक्षे धात्री आमलकी। राघवो रामचन्द्रस्तच्चित्तवृत्तिमिव वैदेहीमयीं सीतामयीम्। पक्षे वैदेही पिप्पली। वैदेही रोचना-सीतावणिक्स्त्रीपिप्पल्योष्वपि। इति विश्वप्रकाशः। क्वचित् क्षीरसमुद्रवेलामिवोज्जृम्भमा-

**रूपां सुग्रीवसेनामिव पनसचन्दनकुमुदनलसेवितामविधवामिव सिन्दूरतिलकभूषितां प्रवालाभरणां च कुरुसेनामिवोलूकद्रोणशकुनिसनाथां धार्त्तराष्ट्रान्वितां चाम्लानजातिभूषितामप्यकुलीनवंशां दर्शिताभयामपि विभीषणां सततहितपथ्यामपि प्रवृद्धगुल्मां षट्पदव्याकुलामपि द्विपदानाकुलां द्विजकुलभूषितामप्य-**

---

ममृतं यस्याम्। ताम्। पक्षेऽमृता गुडूची। गुडूची तन्त्रिकामृतेत्यमरः। क्वचिन्नारायणशक्तिमिव स्वच्छन्दा स्ववशा अपराजिता पराजयरहिता ताम्। पक्षे स्वच्छन्दा निरर्गलप्रसृतापराजिता विष्णुक्रान्ता। विष्णुक्रान्तापराजितेत्यमरः। वाल्मीकिसरस्वतीमिव दर्शित इक्ष्वाको राज्ञो वंशः सन्ततिर्यस्यां ताम्। पक्षे इक्ष्वाकुः कटुतुम्बी स्यादित्यमरः। लङ्कामिव बहुपलाशैः राक्षसैः सेविताम्। पक्षे पलाशो वृक्षः। कुरुसेनामिवार्जुनशरनिकरैः परिवारिताम्। पक्षेऽर्जुनशरौ वृक्षतृणविशेषौ तयोर्निकरैः परिवारिताम्। नारायणमूर्तिमिव बहुरूपामनेकस्वरूपाम्। पक्षे बहुरूपां बहुपशुकाम्। रूपं तु श्लोकशब्दयोः। पशावाकारे सौन्दर्ये नाणके नाटकादिके। ग्रन्थावृत्तौ स्वभावे चेति हैमः। सुग्रीवसेनामिव पनसचन्दनकुमुदैस्तत्तदभिधानैर्वानरैः सेविताम्। पक्षे पनसचन्दने वृक्षौ कुमुदं पुष्पम्। पनसः कण्टकिफले कण्टके कपिरुग्भिदोः। चन्दनं मलयोद्भवे। चन्दनः कपिभेदे स्यात्। कुमुदं कैरवे रक्तपङ्कजे कुमुदः कपौ। दैत्यान्तरे च दिङ्नागयोगयोरपि कीर्तितः॥ इति त्रिषु विश्वप्रकाशः। अविधवामिव सिन्दूरस्य तिलकेन भूषिताम्। पक्षे सिन्दूरतिलकौ वृक्षविशेषौ। सिन्दूरस्तरुभेदे स्यात् सिन्दूरं रक्तचूर्णके। इति विश्वः। तिलकः क्षुरकः श्रीमानित्यमरः। पत्ररचनादिवत्सिन्दूरधारणं प्रोषितभर्तृकाणामित्यविधवोक्तिः। प्रवालाः प्रकृष्टकेशा विद्रुमा वाभरणं यस्यास्ताम्। पक्षे प्रवालाभरणां नवपल्लवाभरणाम्। कुरुसेनामिवोलूकद्रोणशकुनिभिस्तदभिधानैर्वीरैः सनाथाम्। पक्षे उलूकः कौशिकः। द्रोणः काकः। शकुनिः। पक्षिसामान्यम्। तैः सनाथाम्। धार्तराष्ट्रैर्धृतराष्ट्रशतपुत्रैरन्विताम्। पक्षे धार्तराष्ट्राः पक्षिणः धार्तराष्ट्राः सितेतरैरिति राजहंसप्रकरणेऽमरः। अम्लानजातिभूषितामुत्तमजातिभूषितामपि न कुलीन उत्तमकुलविशिष्टो वंशः सन्तानो यस्यास्तामिति विरोधः वंशोऽन्ववायः सन्तान इत्यमरः। यद्वा न कुलीनस्योत्तमकुलस्य वंशो गर्वो यस्याः। वंशो वेणौ कुले गर्वे पृष्ठाद्यवयवेऽपि च। इति विश्वमेदिन्यौ। परिहारस्तु। अम्लानो महासहा जातिर्मालती ताभ्यां भूषिताम्। न कौ लीना वंशा वेणवो यस्याम्। अम्लानस्तु महासहा। सुमना मालती जातिरिति द्वयोरमरः। दर्शितमभयं भयाभावो यया तादृश्यपि विभीषणा भीषयतीति

कुलीनवंशां विन्ध्याटवीं विवेश। अनन्तरं तयोर्निद्रामादाय जगाम रजनी। क्रमेण च कालकैवर्त्तेन तमिस्रानायं प्रक्षिप्य गगनमहासरसि सजीवशफरीनिकर इवापक्रियमाणे तारागणे रक्तांशुकपटे विषमप्ररूढ़विसलताशरयन्त्रकानुगतशतपत्रपुस्तक-सनाथे मकरन्दबिन्दुसन्दोहनिर्भरपानमत्तमधुकरसान्द्रमन्द्र-

---

बिभीषणेति विरोधः। दर्शितमभयं नलदमभया हरीतकी वा यया विभीषणा जनसञ्चार-राहित्यादिति परिहारः। अभयं नलदं सेव्यम्। अभया त्वव्यथा पथ्या त्यमरो द्वयोः। सततं हितं पथ्यं यस्यास्तामप्यसाध्यरोगभिन्नामपि प्ररूढ़गुल्मामिति विरोधः। सततं हिता प्राप्ता पथ्या हरीतकी यया ताम्। हि गतौ। क्तः। गत्यर्थत्वात् प्राप्तार्थः। प्ररूढ़ा गुल्मा यस्याम्। अप्रकाण्डे स्तम्बगुल्माविल्यमरः। षट्पदैर्भ्रमरैर्व्याप्तापि द्विपदैर्मनुष्यैरनाकुला। समुच्चयेऽपिः। अगम्यत्वादिति भावः। यत्तु जगद्धरः षट्पदेषु पदद्वयसद्भावादिति भाव इति तच्चिन्त्यम्। गौरवप्युत्तरा सञ्ज्ञा पूर्वसञ्ज्ञां बाधत इति विरोधानुत्थानात्। न हि विपुत्रो द्विपुत्रव्यपदेशं लभते। यद्वा द्विपानां हस्तिनां दानेन मदजलेनाव्याप्तां षट्पदैर्भ्रमरैर्व्याप्ताम्। द्विजकुलैन भूषितामप्यकुलीनवंशाम्। ब्राह्मणकुलस्य सर्वोत्कृष्टतया विरोधः। परिहारस्तु द्विजकुलैः पक्षिसमूहैर्वा भूषिताम्। अनन्तरं तयोर्वासवदत्ताकन्दर्पकेत्वोर्निद्रामादाय। रजनी रात्रिर्जगाम। क्रमेणोक्तविशेषणयुक्तेषु तारादिषु कन्दर्पकेतुर्वासवदत्तया सह लतागृहे सुष्वापेत्यन्वयः। कालेत्यादि। कैवर्तो धीवरः। आनायो जालम्। कैवर्ते दाश-धीवरौ। आनायः पुंसि जालं स्यादित्यमरो द्वयोः। रक्तांशवः एव रक्तांशुकाः स्वार्थे कन्। त एव पटा यस्य तस्मिन्। रक्तांशुकं रक्तवस्त्रं पटी वसनं यस्येति च। विषमप्ररूढविसलतैव शरयन्त्रकं तालपत्रीयपुस्तकमध्यस्थरज्जुः तेनानुगतं शतपत्रं कुशेशयं तदेव पुस्तकं तेन सनाथे। सरत इति भाषायाम्। मकरन्दबिन्दुसन्दोहनिर्भरपानमत्तमधुकराणां मन्द्रैर्गम्भीरैर्मञ्जुस्वनैः स्वधर्मं पठतीव विकचे विगतकेशे विकसिते च कमलाकरभिक्षौ। मन्द्रस्तु गम्भीर इति स्वरप्रकरणेऽमरः। शतपत्रं कुशेशयमिति कमलप्रकरणे च। कृषीवलेनेत्यादि। कृषीवलः कर्षकः। कर्षकश्च कृषीवल इत्यमरः। उप्यमानेषु टुवप बीजसन्ताने। रजोमुष्टैरेत्यादि। किरणमालिने सूर्याय। रजनीत्यादि। आहतिराघातः। चतान्तरे खण्डितमध्यभागे नायं कलङ्कः। किन्तु मुसलाघातरन्ध्रेणाकाश एव दृश्यत इति योतनाय। चतान्तरत्ववर्णनम्। कण्ठनेत्यादि। संध्येत्यादि। सन्ध्यैव प्रातःसंध्यैवाताम्रं मुखं यस्य तादृशेन वानरवानरेण। तासमुसलत्ववर्णनमन्यजातीयनिवृत्तये। स्फुरदरुण एव सूर्यसार-

मधु स्वनैः स्वधर्म्ममिव पठति विकचकमलाकरभित्तौ क्षपीवले- नेव कालेन तिमिरबीजेष्विव मधुकरेषु कुमुदच्छेत्रेषु मधुरस- कर्द्दमितपरागपङ्केषु घनघट्टमानदलेषु भ्रमरेषु व्याजात् पङ्क- ञ्जेषूप्यमानेषु रजोमुमुर्रसनाथमधुकरपटलानुगतोऽम्बुपुण्डरीक- व्याजाद्रूपपटलमिव भगवते किरणमालिने प्रयच्छन्त्यां कमलिन्यां रजनीवधूकरतलद्वयोच्छलितपतत्प्रभातमुसलाहतिच्युतान्तर उलू- खल इव चन्द्रे कण्डनकीर्णेष्विव तण्डुलेषु तारागणेषु मीलत्सु सन्ध्याताम्रमुखेनेव वासरवानरेण नभस्तरुमारोहता शाखाभ्य इव कम्पिताभ्यो दिग्भ्यो विकचप्रसून इव तारागणे चन्द्रमण्डले फले च निपतति तारागणशालितण्डुलशबलनभोऽङ्गणं स्फुर- दरुणतरुणचूडाचारुवदने वासरकृकवाकौ चरितुमवतरति मत्स- ङ्गतिप्रवृद्धो वारुणीसमागमात् द्विजपतिरेष पतिष्यतीति हस-

---

थिरिव तरुणचूडा तया चारुवदने स्फुरन्त्यारुणया रक्तया तरुणचूडया चारुवदने कृकवाकौ चरितुं भक्षणार्थम् । तारागण एव शालितण्डुलं तेन शबलं नभोऽङ्गणमवतरति । मेघो वर्षतीतिवत् प्रसिद्धेश्चरतेः कर्म नोपात्तम् । मत्सङ्गतेः प्रवृद्ध एष । द्विजराजश्चन्द्रो वारुणी पश्चिमदिक् । तत्सङ्गमात् पतिष्यति । इति हसन्तीमिवाखण्डलककुभि पूर्वदिशि । मया सह यदा सङ्गतस्तदोभयोः समवयस्कतासीत् । इदानीं त्वपराङ्गना उपभुक्तापि प्रवृद्धस्या- सौदयमपि कान्तस्तया चात्तसारोऽत्यौत्सुक्यादापतिष्यतीति भावः । तथाच दत्त्वखलोभाभ्यां परित्यज्य यातस्तत् सुखं माप्स्यतीत्युपहासः । उक्तं चान्यत्र । बाल्योपभुक्ता यस्मादधाति पतिं यथाङ्गं तरुणी करोति । प्रौढा जरां निश्चितमेव मूने वृद्धा नितान्तं बलजीवहानिम् ॥ इति । द्विजराजो ब्राह्मणश्रेष्ठः । वारुणी मदिरा पतिष्यति व्रात्यत्वमेष्यति । रक्तमण्डले- ऽरुणमण्डले भास्कर उदयमारोहतीत्यन्वयः । करीन्द्रेत्यादि । धातुर्गैरिकः । पद्मरागो मणिः । कूटः शृङ्गम् । अस्रं रुधिरम् । रुधिरेऽसृग्लोहितास्रमित्यमरः । प्रमारिका प्रक्षालिकेति हारावली । अनुरागो लोकानां प्रीतिः । ताराकुमुदेत्यादि । फणोपली फणाश्यरत्नं गगनमाकाश एवेन्द्रनीलतरुस्तस्य कनककिसलये स्वर्णपल्लवे राजभवनादौ निर्मितेन रूपकम् । सच रेखा गवयन्यायात् तरुता । नभ इत्यादि । प्राचीरं नगरप्रान्ते कण्टकादिवेष्टनम् । प्राचीरं प्रान्ततो वृतिरित्यमरः । प्राचीललाटतटे कुसुम्भाम्बुबिन्दौ

स्तग्रामिवाखण्डलककुभ्यरुणकेसरिकराघातनिहतान्धकारकरीन्द्र-रुधिर-धाराभिरिवोदयगिरि-शिखर-निर्झर-धौतधातु-धाराभिरिव तुङ्गतुरङ्गखर खुरपुटपाटितपद्मरागच्छटाभिरिव केसरिकरतला-हतमत्तमातङ्गोत्तमाङ्ग-सङ्गलदस्रप्रसारिणोरिवोदयाचल कूटकोटिप्ररूढ़जपाकुसुमकान्तिभिरिव त्रिभुवनकार्य्यसम्पादकप्रभानु-रागरसैरिव रक्तमण्डले ताराकुमुदग्रहणाय प्रसारितहस्त एव कुङ्कुमरागारुणे प्राचीविलासिन्याः पूर्व्वाचलभोगीन्द्रफणोपले गगनेन्द्रनीलतरुकनककिसलये नभोनगरप्राचीरकनककुम्भे तप्त-लोहकुम्भाकारे प्राचीललाटतटकुसुम्भाम्बुबिन्दौ सन्ध्यावनल-तैककुसुमे मञ्जिष्ठारक्तपट्टसूत्रसदृशे सन्ध्यारागगुणगुम्फिते प्राचीकाञ्चनदीनारचक्र इव वासरविद्याधरसिद्धगुटिक इव

---

महारजनजलबिन्दौ । स्यात् कुसुम्भं वह्निशिखं महारजनमित्यपि । इत्यमरः । दीनारचक्रं निष्कचक्रम् । दीनारेऽपि च निष्कोऽस्त्रीत्यमरः । तस्करे मोषके । दस्युतस्करमोषका इत्यमरः । एतादृशे बालातपे प्रसरति । दिग्गजकपोले माञ्जिष्ठं मञ्जिष्ठारक्तं चामरमिव । तेन रक्त-मित्यर्थः । सुरराजशरासनमिन्द्रधनुः । काषायं कषायरक्तम् । शाक्यो बौद्धभेदः । मठिका मढीति भाषायाम् । कर्कन्धुर्बदरी । कर्कन्धूर्बदरी कोलीत्यमरः । जवनिका तिरस्करिणी । प्रतिसीरा जवनिका स्यात् तिरस्करिणी च सा । इत्यमरः । प्रवालो विद्रुमः । चर्णान चोषारश्मेः सूर्य्यस्य रश्मिसमूह उन्मिषमानमायवनीत्यन्वयः । दिननायकान्तोपलं सूर्य्यकान्तमणिः । निःस्पन्दकरणग्रामः स्वस्वविषयग्रहणासमर्थेन्द्रियवर्गः । तत उभयोर्निद्रोत्तरम् । पतङ्गमण्डले सूर्य्यमण्डले नभोमध्यमारूढे सतीत्यन्वयः । वणिजीव प्रसारिताम्बरे प्रसारितवस्त्रे । पचेऽम्बरमाकाशम् । काष्ठमिन्धनं काष्ठा दिक् । दीपिनि प्रकाशके दाहके च । पतङ्गौ पक्षिसूर्य्यौ च । अम्बरं व्योमवाससी इत्युभय-त्रामरः । अथ कन्दर्पकेतुर्दैवेनेति कर्तृपदमध्याहार्य्यम् । प्रियया विनाकृतं लतागृहमव-लोक्य विललापेत्यन्वयः । विनायोगे पृथग्विनानानाभिरिति तृतीया । विरहादुन्मादं वर्णयति । परिहासार्थमन्तर्हिता स्यादिति । क्षणं विटपेषु वृक्षविस्तारेषु । क्षणं लतान्तरे-ष्वन्विष्यन् । तत्र तामनुपलभ्य शङ्कते । ननु नेयं परिहासेनान्तरिता पूर्वं मया नेयं विप्रलब्धा सम्यङ्मदाशयानभिज्ञा क्षुत्तृषार्ता श्रान्ता तादृशानुरागा सेयं शिरीषमृदङ्गी भीषणे प्रदेशे

धातुरागारुणदिग्गजपादतलानुकारिणि विभावरीतिमिरतस्करे भास्कर उदयमारोहति माञ्जिष्ठचामर इव दिग्गजेषु महाभारतसमरभूमिरुधिरोद्गार इव कुरुक्षेत्रेषु सुरराजशरासनकान्तिलेप इव जलदच्छेदेषु काषायपट इव शाक्याश्रममठिकासु कौसुम्भराग इव ध्वजपटपल्लवेषु फलपाक इव कर्कन्धूषु कुङ्कुमच्छटारस इव व्योममहासौधाङ्गणस्य सञ्चरदरुणजवनिकापट इव कालनर्त्तकस्य बालप्रवालभङ्गारुणे प्रसरति बालातपे क्षणेन च चाटुचटुलचक्रवाकहृदयशोकसन्तापहरणादिव दहनसमर्पिततेजःप्रवेशादिव दिननाथकान्तोपलानलसङ्गादिवोष्णायमानमुष्णरश्मेराश्रयति रश्मिसञ्चये कन्दर्पकेतुः सर्वरात्रजागरणपरवशाहारशून्यशरीरतया निश्चेतनोऽनेकयोजनशतभ्रमणखिन्नो वासवदत्तयाप्येवंविधया सह लतागृहे मन्दमारुतान्दोलितकुसुमपरिमललुब्धमुग्धपरिभ्रमद्भ्रमरझङ्कारमनोहरे तत्कालागतया निद्रया गृहीतो निःस्पन्दकरणग्रामः सुष्वाप। ततो वणिजीव प्रसारिताम्बरे महादावानल इव सकलकाष्ठोद्दीपिनि

---

कथं मां परित्यज्य स्थास्यतीति। मानुषीष्वेतादृग्रूपानुपलम्भान्नागकन्येति केनचिन्नागेन वा न नीता स्यादिति क्षणमन्धकूपेषु क्षणं शुष्कपर्णराशिषु [illegible]प्रयोगात् तद्विषोष्मणा वा तत्क्षण एवापगतजीविता भीरुत्वेन शयनस्थान एव परित्यक्ता स्यात्। अत्यपरोरूपा केनचिद्दिव्यविहारिणा विद्याधरादिना वोपहृता स्यादिति क्षणं तरुशिखरेषु क्षणमाकाशे क्षणं दिक्षु विदिक्षु च। क्वाप्यनुपलम्भादनवरतविरहानलदह्यमानहृदयः अतएवापमतसकः आह। प्रिय इत्यादि। दैवदुर्विलसितं भाग्यदुर्विपाकः। अवदातं शुभ्रम्। दैप् शोधने कर्मणि क्तः। अवदातं तु विमले मनोज्ञे सितपीतयोः। इति हैमः। अहो नियतिर्विधिर्दुर्विपाका। दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः। इत्यमरः। दैवनियत्योः पर्यायतया पुनरुक्तिरिति [illegible] न। कालगतिः दुःखेनातिक्रमो यस्याः। कटु क्रूरम्। गुरुजनादिभ्योऽस्मान् परित्यज्य यातोऽपि शक्तिभिर्भोग्यान् भोगान् लभस्वेति [illegible]। स्पष्टार्थं [illegible]र्त्तनदाराणामभिमन्युविलापे महाभारते। [illegible] दुःस्वप्नानामित्यादि।

पतङ्गमण्डले मध्यन्दिनमारूढे कथमपि कन्दर्पकेतुः प्रियया विनाकृतं लतागृहमवलोक्योत्थाय च तत इतो दत्तदृष्टिः क्षणं विटपेषु क्षणं लतान्तरेषु क्षणं तरुशिखरेषु क्षणमन्धकूपेषु क्षणं शुष्कपर्णराशिषु क्षणमाकाशे क्षणं दिक्षु विदिक्षु च भ्रमन्ननवरतविरहानलदह्यमानहृदयो विललाप। प्रिये! वासवदत्ते! देहि मे दर्शनं किं परिहासेनान्तरितामि त्वत्कृते यानि मया

---

भवितव्यतानाम। शुभमशुभं वा नागोचरो नाविषयः। तथा च भवभूतिः। प्रायः शुभं च विदधात्यशुभं च जन्तोः सर्वङ्कषा भगवती भवितव्यतैव। इति। किं विद्या ज्योतिर्नीतिप्रमुखा न सम्यगागमिता न सम्यक् परिशीलिताः। यद्द्वाभ्यां दुर्मुहूर्ते प्रस्थितं नीतिविरुद्धं चाव स्थितमिति भावः। यथावद्यथाशास्त्रम्। इदमर्थेऽप्युभयत्रान्वेति। किं भूदेवा द्विजा अधिक्षिप्तास्तिरस्कृताः। तदुक्तम्। गतश्रीश्च गतायुश्च ब्राह्मणान् द्वेष्टि भारत। इति। तेन किं वा ममेयमवस्थेति भावः। अग्रजन्मभूदेववाडवा इत्यमरः। किं सुरभयो गावो न प्रदक्षिणीकृताः। अथेन्द्रमुपस्थायर्तुस्नातां सुदक्षिणां स्मृत्वा सत्वरो दिलीपो मार्गस्थां धेनुमप्रदक्षिणीकृत्यैव यातस्तया शप्त एवमहमपि किं गोभिः शप्त इति भावः। किं शरणेषु शरणागतेष्वभयं न कृतम्। येन मामपि कश्चित् प्रियादानेन विरहानलान्न त्रायत इति भावः। दक्षिणेनेत्येनबन्तम्। काननमित्यर्थैनपा द्वितीयेति द्वितीया। निर्गत्य कक्षोपान्तेन कतिपयदूरं गत्वा जलनिधिमपश्यदित्यन्वयः। नव्या नडा धमना नलदान्यभयानि नलिन्यः पद्मिन्यः। निचुला हिज्जुलाः। पिचुला झावुकाः। विदुलाः परिव्याधाः। बकुलाः केसरा यत्र तेन। नडस्तु धमनः। नरकट इति ख्यातः। उशीरमस्त्रियाम्। अभयं नलदम्। खस इति ख्यातः। नलिनीपद्मिनीमुखाः। समौ पिचुलझावुकौ। झाऊ इति ख्यातः। द्वौ परिव्याधविदुलौ। वेत इति ख्यातः। अथ केसरे बकुलः। मौलसरीति ख्यातः। निचुलो हिज्जुलोऽम्बुजः। स्थलवेत इति ख्यातः। समुद्रफल इति ख्यात इत्यन्ये। इति सर्वत्रामरः। प्रचुरैश्चिरबिल्वैः करञ्जैर्बिल्वैः शैलूषैः कुटजैः पर्णमयैर्मुनिकुटैः कुटजैश्च भेदैः कक्षोपकण्ठेन। चिरबिल्वो नक्तमालः करजश्च करञ्जके। मुनीनां तु पर्णशालोटजोऽस्त्रियामिति द्वयोरमरः। कुटजो वृक्षभेदे स्यादगस्त्यद्रोणयोरपि। इति विश्वप्रकाशः। कोरया इति भाषायाम्। मौक्तिकभृङ्गराजरसितेन मुन्दरं सुन्दरीवनं यत्र तेन। सुन्दरी तरुभिन्नारीभिदोः स्त्री रुचिरेऽन्यवत्। भृङ्गराजस्तु विज्ञेय ओषधे पक्षिभेदके। इति

दुःखान्यनुभूतानि तेषां त्वमेव प्रमाणं हा प्रिय! मकरन्द! पश्य मे दैवदुर्विलसितं किं मया न कृतमवदातं कर्माहो दुर्विपाका नियतिरहो दुरतिक्रमा कालगतिरहो ग्रहाणामतिकटुकटाक्षनिरीक्षणमहो विसदृशफलता गुरुजनाशिषामहो दुःस्वप्नानां दुर्निमित्तानां च फलितं सर्वथा न किञ्चिदगोचरो भवितव्यतानां किं न सम्यगागमिता विद्याः किं न यथावदाराधिता गुरवः नोपासिता वह्नयः किमधिक्षिप्ता भूदेवाः किं न प्रदक्षिणीकृताः सुरभयः किं न कृतं शरणेष्वभयमिति बहुविधं विलपन् दक्षिणेन काननं निर्गत्य नव्यनडनलदनलिनीनिचुलपिचुलविदुल-

---

धरणिः। विततानां वेतसलतानां व्रातो व्यूह आवरणं येषां तादृशास्तरुणा नवीना वरुणाम्लिकशाकाम्लिकायां स्कन्धे सम्बद्धा भङ्गरोला: कीटाः पक्षिणो भ्रमरा वा यत्र तेन। वल्ली तु व्रततिर्लता। वरणो वरुणः सेतुम्लिकशाक इति इत्यमरः। भङ्गरोलः पक्षिभेदे कीटभेदे च षट्पदे। इति धरणिः। गोलाङ्गूलेत्यादि। गोलाङ्गूलो वानरः। गोलाङ्गूलः प्लवङ्गश्च कीशः शाखामृगः कपिः। इत्युत्पलिनी। तालस्तृणराजः। हिन्तालो हीनोऽल्पस्तालो हिन्तालः। पृषोदरादिः। पूगः क्रमुकः। पुन्नागो देववल्लभः। केसरो नागकेसरस्तैर्घनेन। तृणराजाह्वयस्तालः। ताड इति ख्यातः। पूगः क्रमुको गुवाकः। सुपारीति ख्यातः। पुन्नागे पुरुषस्तुङ्गः केसरो देववल्लभः। गुर्जरदेशे देशरा इति ख्यातः। इति विश्वमरः। केसरो नागकेसरः इति हैमः। घनसारो वृक्षभेदः। कूष्माण्डको वा। मल्लिका हंसास्तृणगुल्मं वा केतकम्। कोविदारो युगपत्रकः। मन्दारोऽर्कः पारिजातको वा। बीजपूरः फलपूरः। जम्बीरो मरुवकः। जम्बूः। गुल्माः स्तम्बास्तैर्गहनेन। कूष्माण्डकः पुष्पफलो घनसार इति हारावली। घनसारस्तु कर्पूरे दक्षिणावर्तपारदे। इति हैमः। मल्लिको हंसभेदे स्यात् तृणगुल्मे तु मल्लिका। इति रुद्रः। कोविदारे चमरिकः कुद्दालो युगपत्रकः। कचनार इति ख्यातः। गणरूपविक्षीरिणाः मन्दरश्च। मदार इति ख्यातः। मन्दारः पारिजातकः। वकाइन इति ख्यातः। मन्दारः पारिजातकः। पञ्चैते देवतरव इति देवतरूवो। फलपूरो बीजपूरः। बिजौरा इति ख्यातः। मरुवकः प्रस्थपुष्पः फणिज्जकः। जम्बीरोऽपि। मरुवा इति ख्यातः। अप्रकाण्डे स्तम्बगुल्माविति षट्स्वमरः। अप्रत्यूह इत्यादि। प्रत्यूहो विघ्नः। पुञ्जीकृतेनाकुण्ठः कलकण्ठः कोकिलस्तस्य स्वरेणाध्यासिता उद्दामसहकारपल्लवा

बकुलेन प्रचुरचिरबिल्वबिल्वोटजकुटजकण्डोपकण्ठेन सोत्कण्ठ-भृङ्गराजरसितसुन्दरसुन्दरीवनेन विततवेत्रव्रततिव्रातावरुद्धतरुण-वरुणस्कन्धसन्नद्धभृङ्गरोलेन गोलाङ्गूलभग्नगलन्मधुच्छत्रमधुपटल-रसासारसिक्ततरुतलेन तालहिन्तालपूगपुन्नागकेसरघनेन घनसार-मल्लिकाकेतककोविदारमन्दारबीजपूरजम्बीरजम्बूगुल्मगहनेनाप्र-त्यूहदात्यूहकुहरितभरितनदीनलनिकुञ्जेन पुञ्जिताकुण्ठकण्ठ-कलकण्ठाध्यासितोद्दामसहकारपल्लवेन चपलकुलायकुक्कुटकुटुम्ब-संवाहितोत्कटविटपेन कोरकनिकुरुम्बरोमाञ्चितकुरबकराजिना रक्ताशोकपल्लवलावण्यलिप्यमानदशदिशा प्रविकसितकेसररजोवि-सरधूसरिमभरेण परागपिञ्जरमञ्जरीमुह्यमानमधुकरमञ्जुसि

---

यव तेन। चपलेन कुलायकुक्कुटकुटुम्बेन संवाहितो मर्दित उत्कटविटपो यव तेन। कोरकेत्यादि। निकुरुम्बः। समूहः। कुरवको रक्तमहामहा। लाल कटसरैया इति भाषायाम्। विसरः समूहः। मुचुकुन्दो वृक्षभेदः। मुचुकुन्दो वृक्षभेदे मुनिदैत्यविशेषयोः। इति विश्वः। कटः गण्डस्थलः। कतिपयदिनप्रसूतकुक्कुट्या कुटीरीकृतं कुटजकोटरं निष्कुहो यव तेन। चटकः कलविङ्कः। चटकः कलविङ्कः स्यात्। पुमपत्ये चाटकैर इति द्वयोरमरः। चटकाया ऐरक्। वाचाटो बहुभाषी। आलजाटचौ बहुभाषिणीत्याटच्। सहचरीणां मधुरारणैः युष्मभिर्विवर्त्तैश्चतुरचकोरैः पक्षिभिर्युग्मना विततेन। तेन वितत्य-युष्पचणपौ। शैलेयम्। कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु शैलेयमित्यमरः। शिलाजित इति ख्यातः। शेफालिका सुवहा। शेफालिका तु सुवहेत्यमरः। निवारीति ख्याता। शिफा जटायां सरति मांसिकायांच मातरि। इति विश्वप्रकाशः। गौधेरः। गोधाया ढ्रगिति ढ्रगन्तः। वयो गौधेरगौधार गौधेया गोधिकात्मजे। इत्यमरः। गोह इति ख्याता रङ्कुर्मृगः। रङ्कुशम्बररौहिषा इत्यमरः। राशिः समूहः। स्यान्निकाय पुञ्जराशी इत्यमरः। रोमन्था-यमानाः। चर्वितस्याकृष्य पुनर्यवणं रोमन्थः। कर्मणो रोमन्थतपोभ्यां वर्तिचरोरिति क्यङ्। ङित्त्वादात्मनेपदम्। चमरो मृगभेदः। श्रवणहारि सलीलं गिरिनितम्बानां निर्झ-रनिनादेन निद्राणं करिकुलं तस्य मन्दायमानः कर्णतालो दुन्दुभिर्यत्र तेन। कुरुरं मृगभेदः चता हरिता श्यामा न तु शुष्का या हरिद्रा तद्द्रवैः रज्यमाना। वराहपोतानां पीवपालि-

क्वणितजनितजनमुदा मदजलमेचकितमुचुकुन्दस्कन्धकाण्डकष-माणनिःशङ्ककरिकटविकटकण्डूतिना कतिपयदिवसप्रसूतकुक्कु-टीकुटीरीकृतकुटजकोटरेण चटकसञ्चार्यमाणचटुलवाचाटचाट-कैरक्रियमाणचाटुना सहचरीचारणचुञ्चुचतुरचकोरचुञ्चुना शैले-यसुकुमारतरशिलातलसुखशयितशशकशिशुना शेफालिकाशि-फाविवरविस्रब्धविवर्तमानगौधेरराशिना निरातङ्करङ्कुणा निरा-कुलनकुलकुलकेलिना कलकोकिलकुलकवलितसहकारकलिको-द्गमेन सहकारारामरोमन्थायमानचमरीयूथेन श्रवणहारिसलो-लगिरिनितम्बनिर्झरनिनाद-निद्राणमन्दायमानकरि-कुलकर्णता-लदुन्दुभिना समासन्नकिन्नरीगीतरवरज्यमानरुरुविसरेण घृत-हरितहरिद्राद्रवरज्यमानवराहपोतपोत्रपालिना गुञ्जापुञ्जगुञ्ज-ज्जालकजालेन दंशनकुपितकपिकपोतनखकोटिपाटितपाटलकी-टपुटसङ्कुलेन कुलिशशिखरखरनखरप्रचयप्रचण्डचपेटपाटितम-

---

मुखाग्रपालिर्यत्र तेन। पोत्रं वक्त्रं मुखाग्रञ्च शूकरस्य हलस्य च। इति विश्वप्रकाशः। पालिः। पंक्तिप्रदेशयोरिति विश्वः। गुञ्जानां काकचिञ्चीनां पुञ्जे गुञ्जज्जालकजालं यत्र तेन। गुञ्जापि पटहे प्रोक्ता काकचिञ्चयां कलध्वनौ। इति विश्वप्रकाशः। जालकः कथितो घोङ्घः कारुडी चापि जालकः। इत्युत्पलिनी। घोङ्घे कारुडिकायां च जालकः परिकीर्त्तितः। इति हारावली। दशनेत्यादि। पाटलकीटः श्वेतरक्तः कीटविशेषः। कुलि-शशिखरं वज्राग्रम्। केसरभारः स्कन्धकेशसमूहः। भासुरं दीप्तिमत्। भस्त्रभासेति घर्जलः। कदम्बकं समूहः। अतिचपलवीचिप्रचयतयातिचञ्चलतरङ्गसमूहतया। ताण्डवे-षड्गण्डो दोर्दण्डो भुजदण्डो यस्य तादृशः। खण्डपरशुः शिवस्तद्विडम्बनापण्डितस्तदनुकरण-पण्डितमम्। भर्त्तेशः खण्डपरशुरित्यमरः। वारुणी वरुणस्येयम्। विजयपताकाभिरिव। जलाधोगत्वादिति भावः। शेष इत्यादि। निर्मोकः। समौ कञ्चुकनिर्मोकावित्यमरः। सन्ततिः समूहः। लज्जा लीलार्थं क्रीडार्थं यदातर्पणम्। अदपन इति भाषायाम्। तदाभाभिरिव। विच्छित्तियमत्कारः। रामणीयकं रमणीयता। अपरामित्यादि। सगरो राजा। खातम्। खनु अवदारणे क्तः। जनसंन्यात्वम्। पारिजातो देववृक्षः। अभिजातानां

त्तमातङ्गकुम्भस्थलरुधिरच्छटाच्छुरितचारुकेसरभारभासुरकेसरि-
कदम्बेन महासागरकच्छोपान्तेन कतिपयदूरं गत्वातिचपलवीचि-
प्रचयतया ताण्डवोद्दण्डदोर्दण्डखण्डपरशुविडम्बनापण्डितं वारु-
णीविजय-पताकाभिरिव शेषकुलनिर्मोक-मञ्जु मञ्जरीभिरिव
शशाङ्कपरिशेषपरमाणुसन्ततिभिरिव लक्ष्मीलीलातर्पणधाराभि-
रिव जलदेवताचन्दनविच्छित्तिभिरिव फेनराजिभिरुपात्तराम-
णीयकमपरमिव गगनमवनिमवतीर्णमर्णवच्छलादुच्छलच्छीकर-
कणनिकरैर्नभश्चरान् मुक्ताफलैरिव विलोभयन्तमभयाभ्यर्थनाग-
तानेकसपक्षक्षितिधरभरितकुक्षिभागं सगरसुतशताखातमुत्खा-
तपारिजातकमभिजातमणिरत्नाकरं करिमकरकुलसङ्कुलं शकुल-
कुलकवलनाभिलाषसञ्चरन्नक्रचक्रमस्तिमिततिमिङ्गिलकुलं कूल-
कन्दलीवलया-चलविलुलितवेलातरलित-लवलीलवङ्गमातुलिङ्गगु-
ल्ममूर्मिमारुत-प्रसारिततरलतोत्ताल-तालहिन्तालतालीतरलित-

---

जातानां मणीनां रत्नानां चाकरः। करी जलचरो गजो मकरश्च। तयोः कुलेन। करिरूपमकरकुलेन वा सङ्कुलम्। शकुलो मत्स्यभेदः। नक्रः कुम्भीरः। अस्तिमितं चञ्चलम्। तिमिं मत्स्यं गिलतीति तिमिङ्गिलः। मूलविभुजादित्वात् कः। अचि विभाषेति लत्वम्। गिलेऽगिलस्येति मुम। महामत्स्यस्तस्य कुलं यत्र तम्। कूलमित्यादि। लवली लताभेद इति केचित्। फलमित्यपरे। हरफारेवडीति प्रसिद्धम्। मातुलिङ्गको रुचकः। रुचको मातुलिङ्गक इत्यमरः। प्रवालो विद्रुमः। पाटितं विदारितम्। शङ्खनखाः क्षुद्रशङ्खाः। क्षुद्रशङ्खाः शङ्खनखा इत्यमरः। खगेश्वरो गरुडः। अपस्मारो रोगः। सुरा मद्यम्। आलानं बन्धस्तम्भ इत्यमरः। कुम्भनसी राक्षसी लवणस्तत्सुतः। व्याकरणमिव विततानि स्त्री स्वाधिकारकार्याणि नदीसंज्ञा तत्कार्याणि। कृत्यसंज्ञाकार्याणि। बहुलं अथवा बहुल-मित्यादि। पक्षे विततानां स्त्रीनदीनां पत्नीभूतानां नदीनां कृत्यैस्तरङ्गाधारपानरूपैर्बहुलम्। राजकुलमिव। महापात्रं महामात्यः। पक्षे पात्रं तीरद्वयान्तरम्। बन्ध बन्धने। अधिकरणे घञ्। हस्तिनो बध्यन्तेऽत्र हस्तिबन्धः। गजबन्धनस्थानमिव वारिगतैर्बन्धनरज्जुगतैस्ततै-रनेकनागैर्गजैर्मुच्यमानफूत्कारम्। पानीये वारि विख्यातं वारि बन्धनरज्जुषु। इति

जलमानुषमिथुनमृदितसलिलपुलिनबालशैवालं प्रवालाङ्कुरकोटि-
पाटितमुखखिन्नशङ्खनखशिखालिखिततटलेखं खगेश्वरगोत्रपत्र-
रथपटलकलिलसलिलमद्याप्यनिर्मुक्तमन्दरमथनसंस्कारमिवावर्त-
भ्रान्तिभिः सापस्मारमिव फेनैः ससुरामोदमिव वेलाबकुलगन्धैः
सरोषमिव गर्जितैः सखेदमिव निश्वसितैः सभ्रुकुटीभङ्गमिव
तरङ्गैः सालानस्तम्भमिव रामसेतुना कुम्भीनसीकुक्षिमिव लवणो-
त्पत्तिस्थानं व्याकरणमिव विततस्त्रीनदीप्रत्ययबहुलं राजकुलमिव
दृश्यमानमहापात्रं हस्तिबन्धमिव वारिगतानेकनागमुच्यमान-
फूत्कारं विश्वामित्रपुत्रवर्गमिवाम्भोजचामरमत्स्योपशोभितं सत्-
पुरुषमिव गोत्राश्रयं साधुमिवाच्युतस्थितिरमणीयं सुनृपमिव
मज्जनक्रमकरं कृतमन्युमिव करतोयाप्लुतमुखं विरहिणमिव
चन्दनोदकतिक्तं विलासिनमिव नर्मदानुगतमुद्धृतकालकूटमपि

---

धरणिः। वसिवपियजि राजिव्रजिसदिहनिवाशिवादिवारिभ्य इञितीञ्। पक्षे वारि जलम्। नागाः सर्पाः। अमरस्तु। वारी तु गजबन्धनीति दीर्घान्तं बन्धनस्थानवाच्यमाह। मन्मते तु नैतदुपपद्यते कोशान्तरेष्वेवमेव। विश्वामित्रपुत्रवर्गमिव। अम्भोजैः कमलैश्चामरैर्वालव्यजनैर्मत्स्यदेशाधिपैः शोभितम्। पक्षेऽम्भोजचामरं शैवालम्। शैवालं शैवालाम्भोजचामरं जलनीलिका। इत्युत्पलिनी। सत्पुरुषमिव गोत्रं वंशः। पक्षे पर्वतः साधुमिवाच्युताभ्रष्टा स्थितिर्मर्यादा तया रमणीयम्। पक्षेऽच्युतस्य विष्णोः स्थित्या रमणीयम्। सुनृपमिव सज्जनानां क्रमकरं व्यवहारकरम्। पक्षे मज्जा नक्रा मकरा यत्र तम्। कृतमन्युमिव कृतक्रोधमिव करतोयेन पाणिस्थजलेनाप्लुतं क्षालितं मुखम्। पक्षे करतोया नदी करतोया सदानीरेत्यमरः। विरहिणमिव चन्दनस्योदकेन सिक्तम्। पक्षे चन्दना नदीविशेषः। चन्दनसम्बन्धि जलं वा। विलासिनमिव नर्म क्रीडा तां ददाति ताभिरनुगतम्। पक्षे नर्मदा नदी। नर्मदा सोमोद्भवेत्यमरः। उद्धृतः कालकूटो हालाहलो यस्मात् तमपि। प्रकटितो विषस्य पुञ्जस्य राशिर्येन तमिति विरोधः। विषं जलमिति परिहारः। अतिह्रस्वमतिस्थविरमपि सुन्दरीभिः स्त्रीभिः परिहृतकण्ठमिति विरोधः। अतिह्रस्वं महीयांसम्। सुन्दरी तरुभेदः। कण्ठः समीपदेशः। इति परिहारः। कण्ठो गले

प्रकटितविषराशिमतिवृद्धमपि सुन्दरोपरिवृतकण्ठं सुरोत्पत्तिस्थानमप्यसुराधिष्ठितं जलनिधिमपश्यदचिन्तयच्च। अहो! मे कृतापकारेणापि विधिनोपकृतिरेव कृता यदयं लोचनगोचरतां नीतः समुद्रः। तदत्र देहमुत्सृज्य प्रियाविरहाग्निं निर्वापयामि। यद्यप्यनातुरस्य देहत्यागो न विहितस्तथापि कार्यः। न खलु सर्वः कार्यमकार्यं वा करोति। इत्यसारे संसारे केन किं वा न कृतम्। तथाहि। गुरुदारग्रहणं द्विजराजोऽकरोत्। पुरूरवा ब्राह्मणधनतृष्णया विननाश। नहुषः परकलत्रदोहदी महाभुजङ्ग आसीत्। ययातिर्विहितब्राह्मणीपाणिग्रहणः पपात। सुद्युम्नः स्त्रीमय इवाभवत्। सोमकस्य प्रख्याता जन्तुबधनिर्घृणता। पुरुकुत्सः कुत्सित आसीत्। कुवलयाश्वो-

---

गलध्वाने समीपेऽपि प्रकीर्तितः। इति विश्वः। सुरायन्द्रादयो मद्यं वा तदुत्पत्तिस्थानमपि ताभ्यामनधिष्ठितमिति विरोधः। यद्वा सुरस्य ब्रह्मण उत्पत्तिर्यस्मात् सुरोत्पत्तिर्विष्णुस्तस्य स्थानमपि। असुरैरधिष्ठितमिति परिहारः। अचिन्तयदित्यादि। यद्यतो यस्त्रिविधे राघवेणारण्यवियुक्ता कान्ता विन्ना सोऽयं लोचनगोचरतां नीतः। तदत्र देहमुत्सृज्य शरीरत्यागं कृत्वा। तत्कृतकर्माचरणासामर्थ्यादिति भावः। प्रियाविरहाग्निं निर्वापयामि। तेनाऽद्य कान्तां विरहाश्रयाग्नी निर्वापितः। अहं तु शरीरमुक्तिरित्यर्थः। एति जीवन्तमानन्दो नरं वर्षशतादपि। इति प्राचीनगाथयात्मघातनिषेधादाह। यद्यपीत्यादि। आतुरस्य तु मरणम्। दुश्चिकित्स्यैर्महारोगैः पीडितस्तु सुमहामपि। प्रविशेज्ज्वलनं दीप्तं कुर्यादनशनादिकम्॥ इत्यादि स्मृत्युक्तमेव। अवश्यं भाविनो भावा भवन्ति महतामपि। नग्नत्वं नीलकण्ठस्य महाहिशयनं हरेः॥ अपथं पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः। इत्यादिना भवितव्यताप्राबल्यं मन्वान आह। तथापीति। उभयमपि करोतीति भावः। अस्मिन्निति किमकार्य्यं न कृतमित्यर्थः। द्विजराजश्चन्द्रः। गुरुदारग्रहणं बृहस्पतिभार्यायास्ताराया ग्रहणं तया सह सुरतं तत्र बुध उत्पन्न इत्यादिपर्वणि कथा। पक्षे द्विजराजो ब्राह्मणश्रेष्ठः श्रुतिस्मृत्याद्यध्ययनसम्पन्नः। गुरुदारग्रहणं गुर्वङ्गनागमनम्। पुरूरवा राजा वयःशेषे ब्रह्मस्वमपहाय तत एव नष्ट इत्यपि भारते। नहुषो राजा परकलत्रदोहदीन्द्राण्यां साभिलाषो महाभुजङ्गः सर्प

ऽश्वतरकन्यामपि जहार। नृगः कृकलासतामगमत्। नलं कलिरभिभूतवान्। शम्बरणो मित्रदुहितरि विक्लवतामगात्। दशरथ इष्टरामोन्मादेन मृत्युमवाप। कार्त्तवीर्य्यो गोब्राह्मण-पीडया पञ्चत्वमयासीत्। युधिष्ठिरः समरशिरसि सत्यमुत्स-सर्ज। शान्तनुरतिव्यसनाद्विपिने विललाप। इत्थं नास्त्य-

---

आसीत्। कामुको द्रौपदी मत इति रत्नकोशः। ब्रह्मवधदोषदूषिते मघोनि नहुष इन्द्रपदे स्थितस्तत इन्द्राण्यां साभिलाषोऽभूत्। यद्यपूर्ववाहनारूढो मां समयेऽवयास्यसि तदा स्वीक्रियते मयेत्यभिहितो महर्षीन् याने नियुज्य सर्पसर्पेति त्वरमाणोऽगस्त्येन सर्पो भवेति शप्त इति हरिवंशे। ब्रह्महत्या कामान्धतया महर्षिपीडनं चोक्तमनेन। ययातिः राजा कृतब्राह्मणीपाणिग्रहणः कृतदेवयानीपाणिग्रहणः पपात। तारुण्यादित्यर्थः। ययातिर्भृगुसुतया देवयान्याः परिचारिकायां शर्मिष्ठायामप्यासक्तो देवयान्या भार्गवाय निवेदितस्तेन शप्तः। प्रजरा भवेति। अतिकामुकत्वेन वयोऽन्तरप्राप्तिर्ध्वनिता। सोमकस्यैतदभिधानस्य जन्तोस्तन्नाम्नः पुत्रस्य वधेन निर्घृणता। पक्षे जन्तवः शरीरिणः। सोमकस्य शतस्त्रीष्वेकस्यां जन्तुसंज्ञः पुत्र उत्पन्नः। स कदाचित् पिपीलिकया दष्टो ऽरुदत्। ततः सर्वास्तन्मातरोऽरुदन्। ततोऽन्तःपुरे महानाक्रन्द आसीत्। तत् श्रुत्वा राज्ञा पुरोहितः पृष्टः। स्युर्मे बहवः पुत्राः कथमिति तेन जन्तुर्हतो हुतश्च तद्गन्धाघ्राणात् सर्वाः सगर्भाः संवृत्तास्ततः शतं पुत्रास्तस्याभवन्निति भारते। जन्तुजन्युशरीरिण इत्यमरः। एतेन वयो महापातकिनो वर्णिताः। कुवलयाश्वो राजाश्वतरकन्यामश्व-तराख्यनागकन्यामपि जहार। कुवलयाश्वो भार्यायां मदालसायां प्रमीतायामत्यन्तवि-क्लवः। तन्मित्राभ्यामश्वतरपुत्राभ्यां तद्वृत्तान्तः पित्र आख्यातः। पुत्रमित्रत्वान्मायानि-र्मितां मदालसां तस्मायर्पयत् सः। न भक्ष्यसात् कृतः कोऽपि विप्रः केनापि भूतले। आब्रह्मसृष्टेरित्येतद्विस्मृत्य स्मरमोहितः॥ मनुजो नागकन्यामप्याजहार मदालसाम्। कामान्धतां ध्वनयितुमिदमाह नृपात्मजः॥ अज्ञानादपि सञ्जातं पातकं फलति ध्रुवम्। इति प्रदर्शयन्नाह नृगस्य कृकलासताम्॥ नृगो राजा। कृकलासतां सरटत्वमगमत्। सरटः कृकलासः स्यादित्यमरः। नृगेण पुष्करे तीर्थे गा द्विजवा कृताः पुरा। तन्मध्या-न्नाद्विजस्यैका कपिला मिलिताभवत्॥ अपराधादतस्तेन शप्तः सरटतामयात्। नलं राजानं कलिस्तुर्य्ययुगोऽभिभूतवान्। कालेन कलिना सोऽपि पुण्यश्लोकोऽतिपीडितः। इति संकीर्तयन्नूचे नलाख्यानं पुरातनम्॥ शम्बरणो मित्रदुहितरं प्रति सूर्य्यसुतां प्रति।

कलङ्कः कोऽपि। तदहमपि देहं त्यजामि। इति विचिन्त्य कुररखरनखरशिखरखण्डितपृथुरोमबिलमविरलशकुलकुलशल्क-जलकुलोच्चारं क्रोष्टृकुलोत्सृष्टविकटकर्कटकर्परपरम्परापरिगतोपान्तमति-तरलतरजल-रयलुलितचटुलशफरकुलकवलनकृत-मतिनिभृतबकशकुनि-निवहधवलितपरिसर-मतिचपलजलकपि-कुलविहरणलुलितसलिल-कणनिकरजनित-पवनरयपरिमिलित-शिशिरतरमनुदिवसनिपतदतितरुणवनमहिषगवलशिखरलिखि-तविषमतटमनवरतचरदसितमुखचरण-विहगनिवहमधुर-निनद-मुखरितमहिमकरचरणरुचिर-जलमनुजशयनमृदित-जलधरणि-तलमतिबहलमदजलशबलकरटतटकरिवर-शतनिपतितमधुकर-

---

पचे मित्रस्य सुहृदो दुहितरम्। स्पष्टम्। दशरथ इति। मृगयायां हतस्य तपस्विनः पित्रोर्यथा पुत्रवियोगादावयोर्मृतिरेवं पुत्रशोकान्मृतिस्तेऽस्तु। इति शापाद्रामवियोगेन मृतिः। मृगयासक्तिव्यसनेन तपस्विवधोऽपि ध्वनितः। कार्तवीर्यसहस्रबाहुर्गोर्जमदग्निगोब्राह्मणस्य जमदग्नेः पीड़या मृतः। अनेनैवापराधेन रामेण निहतोऽर्जुनः। युधिष्ठिर इति। शान्तनुरिति। शोकान्मृतिर्देहोत्सर्गो वने च परिदेवनम्। कन्दर्पकेतुः स्वकृतावुपष्टम्भकमुक्तवान्॥ तदहमपि देहं त्यजामीति विचिन्त्य पुलिनमाससादेत्यन्वयः। कुररा उत्क्रोशास्तेषां खरनखरशिखरैः खण्डितपृथुरोमबिलं झषबिलम्। उत्क्रोशकुररौ समौ। पृथुरोमा झषो मत्स्य इत्यमरः। अविरलानि शकुलकुलस्य मत्स्यविशेषकुलस्य शल्कानि यत्र। तादृशा जलनकुलानामुच्चारा यत्र तत्। शल्कं शकलवल्कले इत्यमरः। उच्चारावस्करौ शमलं शकृदिति च। क्रोष्टृकुलोत्सृष्टाः शृगालकुलत्यक्ताः विकटा कर्कटानां कर्परपरम्पराः कपालपरम्परास्ताभिः परिगतोपान्तं व्याप्तप्रान्तम्। स्यात् कर्परः कपालोऽस्त्रीत्यमरः। अतितरलजलस्य रये वेगे लुलितं चटुलं यत् शफरकुलम्। तत्कवलने कृतमतिरतएव निभृतो मन्दचेष्टागुल्मो बकशकुनिनिवहस्तेन धवलितपरिसरम्। अतिचपलेति। शिशुमारो जलकपिश्चन्द्रकी चासिपुच्छकः। इति हारावली। अनुदिवसं निपतन्तोऽतितरुणा वनमहिषास्तेषां गवलशिखरैः शृङ्गाग्रैर्लिखितानि विदारितानि तैर्विषमतटम्। गवलं माहिषं शृङ्गमित्यमरः। अत्र गवलप्रयोगे यच्छ्राव्यं तदन्यथोक्तम्। अनवरतं चरन्तोऽसितमुखचरणा धार्तराष्ट्रास्तेषां निवहस्तस्य मधुरनिनादैर्मुखरितम्।

विरुतरतिकरमतिजवन-पवनविधुतजलधिजल-पटलविनटननिपतितमणिगणपरिगतपरिसरं जलनिधिभुजगनिर्मुक्तनिर्मोकपट्टमिव दर्पणमिव वसुन्धरायाः स्फटिककुट्टिममिव वरुणस्य विपुलं पुलिनजलमाससाद। ततः कृतस्नानादिर्जलमवतरितुमारेभे शरीरत्यागाय। अथ सानुग्रहेषु ग्राहेषु निर्मत्सरेषु मत्स्येष्वक्षुद्रेषु क्षुद्रेषु वत्सलेषु कच्छपेष्वक्रूरेषु नक्रेष्वभयङ्करेषु मकरेष्वमारेषु शिशुमारेष्वाकाशसरस्वती समुदचरत्। आर्य कन्दर्पकेतो! पुनरपि तव प्रियया सह सङ्गमो भविष्यत्यचिरेण तद्विरम मरणव्यवसायादिति। तदुपश्रुत्य मरणाद्विरराम पुनः प्रियया समागमेच्छया शरीरस्थितिहेतुमाहारं चिकीर्षुर्महा-

---

राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः। मलिनैर्मल्लिकाख्यास्ते धार्तराष्ट्राः सितेतरैः॥ इत्यमरः। अहिमकरः सूर्यस्तस्य चरणैरिव किरणैरिव रुचिरं भासुरं जलमनुजानां जलमनुष्याणां शयनेन मर्दितं जलगतं जलान्तर्गतं धरणितलं यत्र। यद्वा। अहिः सर्पो मकरो जलजन्तुभेदस्तयोश्चरणेन भ्रमणेन रुचिरं पोताधानादिरहितं जलजमनुजशयनेन मर्दितं जलधरणितलं यत्र। अतिबहलमदजलशबलः करटो गण्डो येषां तादृशकरिवरशतेषु निपतितमधुकराणां विरुतिभिः शब्दैः रतिकरम्। काकेभगण्डौ करटावित्यमरः। कट इत्यपि पाठोऽर्थस्त्वभिन्नः। अतिजवनोऽतिवेगवान् पवनस्तेन विधुतजलधिजलपटलान्निपतितो मणिगणो यत्र तादृशः परिसरो यस्य तम्। जवनस्तु जवादिक इत्यमरः। जलनिधीत्यादि। तत इत्यादि। आकाशसरस्वती आकाशवाक् समुदचरदुत्थिता अकर्मकत्वादुदश्चर इत्यात्मनेपदं न। तत्स्वरूपमाह। आर्येत्यादि। एकदा वर्षासमय आजगामेति सम्बन्धः। काकलीगायनः कलसूक्ष्मगायनस्तद्वत्। मन्द्रं निम्नं नीचं गभीरं वागानन्दं ददाति तादृशः। पक्षे सस्याः परिपूर्णपाकाः निम्नगा नद्यो नदाश्च यत्र। काकली तु कले सूक्ष्मे। निम्नं गभीरं गम्भीरमिति द्वयोरमरः। नीलकण्ठः शिवः। पक्षे मयूरः। कुमारमयूर इव सम्यगूढः शरजन्मा षडाननो येन। पक्षे समूढानां पुञ्जीभूतानां शराणां जन्म यत्र। समूढः पुञ्जिते भुग्ने सद्योजाते धृतेऽपि च। इति विश्वः। रजो धूलिः। पक्षे द्वितीयो गुणः। तापस इव तपस्वीव धृतो जलदो जलप्रदः करकः कमण्डलुर्येन। पक्षे धृता जलदाः करका वर्षोपला येन। करका मेघपाषाणे

सागरकच्छोपान्तभुवं जगाम। अथ तत इतः परिभ्रमन् फलमूलादिना वने वर्त्तमानः कियन्तं कालं निनाय कन्दर्प-केतुः। एकदा कतिपयमासापगमे काकलीगायन इव सन्नद्ध-निम्नगानदः सन्ध्यासमय इव नर्त्तितनीलकण्ठः कुमारमयूर इव समूढ़शरजन्मा महातपस्वीव प्रशमितरजःप्रसरस्तापस इव धृतजलदकरकः प्रलयकाल इव दर्शितानेकतरणिविभ्रमो निरुपद्रुतकाननोद्देश इव घनोत्सुकितसारङ्गो रेवतीकरपल्लव इव हलिधृतिकर आजगाम वर्षासमयः। निर्भिन्नमेघनीलो-त्पलकानने क्रीडासरसीव नभसि स्मरस्य रत्ननौकेव जलदलक्ष्मी-मातङ्गकन्यानर्त्तनरज्जुरिव नभःसौधतोरणमालिकेव प्रवसता निदाघेन दिवः पयोधरे दत्ता स्मरणाय नखक्षतावलीव गगनल-क्ष्मीरत्नरसनामालेव नभोमन्दारतरुसुन्दरकलिकामालेव रतिनख-मार्जनरत्नशलाकेव रत्नशुक्तिरिव कुसुमकेतोरिन्द्रधनुर्लता रराज। अतिवेगनिपीतजलधिजलशङ्खमालामिव बलाकाच्छलादुद्वमन्न-दृश्यत जलदः। पीतहरितैः क्षणासु केदारिकाकोष्ठिकासु समु-

---

करका च कमण्डलौ। दाडिमेऽपि च करकं करौ च करकः स्मृतः॥ इति विश्वः। वर्षासु करकावर्णनं कविसम्प्रदायः। प्रलयकाल इव दर्शितोऽनेकतरणीनां सूर्याणां विभ्रमो येन। पक्षे तरणिर्नौः। स्त्रियां नौस्तरणिस्तरिरित्यमरः। विभ्रमो भ्रमणम्। निरुपद्रुतकाननोद्देश इव घनमत्यन्तं घना वोत्सुकिताः सारङ्गा हरिणा यत्र। पक्षे घनेन मेघेनोत्सुकिताः सारङ्गाश्चातका यत्र। चातके हरिणे पुंसि सारङ्गः शबले त्रिषु। इत्य-मरः। रेवतीकरपल्लव इव हलिनो बलरामस्य धृतिकारी धैर्याधायकः। पक्षे हलिनां कर्षकाणां धृतिकरः प्रीतिकरः। इन्द्रधनुर्लता रराजेति सम्बन्धः। निर्भिन्ने विकसिते मेघ एव नीलोत्पलकानने क्रीडासरसीव नभसि कुसुमशरस्य रत्ननौकेव रत्नजटि-तनौकेव जलदलक्ष्म्येव मातङ्गस्य चण्डालविशेषस्य कन्या सैव नर्त्तकी तस्या रज्जुः समा-कर्षणरज्जुः। चण्डालकन्या रज्जुमवलम्ब्य नृत्यति। चण्डालप्लवमातङ्गदिवाकीर्ति-जनङ्गमाः। इत्यमरः। नभ इति। प्रवसता निदाघेनोष्णोपगमेन स्मरणाय दिवो

स्पतद्भिर्जतुशबलैरिव दर्दुरैर्नयद्यूतैरिव चिक्रीड वर्षाकालः । रविदीपकज्जलनिचयनिभे निकषोपल इव मेघसमयसुवर्णकारनिकषितसुवर्णलेखेव तडिदशोभत । विरहिणां हृदयं विदारयितुं करपत्रमिव कुसुमायुधस्य क्रकचच्छदमशोभत । जलददारुणि लोलतडिल्लताकरपत्रदारिते पवनवेगनिर्धूताश्चूर्णचया इव जलरेणवो बभुः । विच्छिन्नदिग्वधूहारमुक्ता इव खरपवनवेगभ्रमितघनमेघघरट्टघट्टनसञ्चूर्णिततारानिकरा इव त्रिभुवनविजिगीषोर्मकरध्वजस्य प्रस्थानलाजाञ्जलय इव करका व्यराजन्त । अनन्तरमखञ्जखञ्जरीटेऽकुञ्चितक्रौञ्चसञ्चारे निर्भरभारद्वाजद्विजवाचाटविटपे पटुप्रभप्रभाते भ्रान्तशुककुलकलमकेदारे प्रवेशिका-

---

र्योः पयोधरे स्तने मेघे च दत्तानि नखक्षतानीव । चिरोत्पन्नप्रवासेन प्रीतिर्गच्छेत् पराभवम् । रागायतनसंस्कारि यदि न स्यान्नखक्षतम् ॥ इति कामतन्त्रम् । निदाघ उष्णोपगमः । द्यौर्दिवौ द्वे स्त्रियामभ्रमित्यमरो द्वयोः । गगनलक्ष्म्या रवरसनेव काञ्चीव । स्त्रीकट्यां मेखला काञ्ची सप्तकी रसना तथा । इत्यमरः । नभोमन्दारस्य देवतरुविशेषस्य सुन्दरकलिकामालेव । रतिरित्यादि । अतिवेग इति शङ्कपाने हेतुः । बलाकाच्छलाद्विसकण्ठिकामिषादूर्ध्वंमगलन्दर्शोऽदृश्यत । बलाका बिसकण्ठिकेत्यमरः । बकजातिविशेषः । कैतवापह्नुतिरलङ्कारः । कैतवापह्नुतिर्व्यक्तौ व्याजाद्यैर्निह्नुते पदैः । इति लक्षणात् । कृष्णास्वसितासु मदूर्वास्वित्यर्थः । जातिद्वयमङ्गावाहिशेषणसार्थकाम् । क्वचित् कृष्टास्विति पाठस्तत्र हलसंस्कृतास्वित्यर्थः । केदारिका एव कोष्ठिकास्तासु । केदारकोष्ठाभ्यामल्पत्वे कनि रूपम् । कियारीति भाषायाम् । वस्त्रादिनिर्मितं क्रीडासाधनं स्थलविशेषः । कोठा इति च । पीतहरितैस्तदर्थैर्जतुशबलैर्लाक्षारक्तैः । नयो युक्तनीतिस्तच्छिन्नकैर्दीव्यत्नक्षैर्द्यूतरङ्गसाधनेषु लक्षणा नयद्यूतसाधनभूतैर्हंस्यश्वादिभिरिव समुत्पतद्भिर्दर्दुरैर्भेकैः कालश्चिक्रीड । जातरैरिति पाठे विकारे त्रपुजतुनोः षुगित्यण् षुगागमश्च । रविरिति । निकषोपलमाकषः । आकषो निकषोपलम् । कसौटीति भाषायाम् । विरहिणामिति । करपत्रं क्रकचम् । क्रकचोऽस्त्री करपत्रमित्यमरः । आरा इति भाषायाम् । क्रकचपत्रं केतकपत्रम् । ट्रोणीदलं सूचिपुष्पं जम्बालं क्रकचच्छदम् । इति हारावली । लोलतडिल्लताकरपत्रदारिते जलददारुणि मेघकाष्ठे पवनवेगनिर्धूताः कम्पिताश्चूर्णचया इव

वेशिकराजहंसे कंसारातिदेहद्युतिद्युतले हंसतूलतुलितजरज्जल-
मुचि सान्द्रीकृतेन्द्रमहकामुकमुदि मधुरमधुतृणवीरुधि सुरससा-
रसरसितसारकासारे शोभनकसेरुकन्दलुब्धपोत्रिपोत्रोत्खाततट-
तड़ागे चकितचातके सञ्चरन्मत्स्यपुत्रिकापत्रिपटलमधुरध्वनिवि-
हितमुदि कदर्थितकदम्बे कम्बुद्विषि प्रसृतबिसप्रसूने विरलवारिदे
तारतरतारके चारुचन्द्रमसि स्वादुतरसर:सलिले स्फुरितश-
फरचक्रकवलननिभृतबकानीके मूकमण्डूकमण्डले सङ्कोचितक-
ञ्चुकिनि काञ्चनच्छेदगौरशालिशालिनि क्रोशदुत्क्रोशे सुरभि-
गन्धिसौगन्धिकगन्धहारिहरिणाक्षे कुमुदामोदिनि कौमुदीकृत-
मुदि निर्बर्हबर्हिणि नि:कूजत्कोयष्टिके धृतधार्त्तराष्ट्रे हृष्टकलम-
गोपिकागीतसुखितमृगयूथे कयोकृतयूथिके म्लायमानमालतीमु-

---

जलरेणव: शीकरा बभु: शुशुभिरे। विच्छिन्नेति। घनो मेघ एव घरट्ट:। जाता इति भाषायाम्। पुरुषप्रेरणानिरपेक्षो जलादिरयभ्रममाण:। करका वर्षोपला:। अनन्तरं शरत्समयारम्भे कन्दर्पकेतु: शिलामयीं पुत्रिकां पाञ्चालिकां मम प्रियानुकारिणीयमिति तां करेण पस्पर्शेति सम्बन्ध:। शरदं वर्णयन्नाह। अखञ्जा: सद्गतय:। खजि गतिवैकल्ये। अकुञ्चिते विस्तृते निर्भरं भारद्वाजद्विजैर्वाचाटविटपे। भारद्वाजवाचाटत्वं विटपेष्वारोप्यते। तेन लक्षणानामालङ्कारोऽत्र। साक्षादनभिसम्बन्धात् सम्बन्धिषु परिग्रह:। यत्र सा लक्षणा नाम। इति कण्ठाभरणे। पटुप्रभं सुन्दरं प्रभातं यत्र। भ्रान्तं भ्रमणविशिष्टं शुककुलं तादृशं कलमानां शालीनां केदारं चैवं यत्र। प्रवेशिका आवेशिका आगन्तवो राजहंसा यत्र। स्युरावेशिक आगन्तुरित्यमर:। कंसारातिदेहद्युति कृष्णशरीरतुल्यकान्ती द्युतले हंसवत् तूलं हंसतूलं तत्तुलिते जरज्जलमुचि पुराणमेघे जलसंयोगकृतं नवत्वं जलवियोगकृतं जरत्त्वं बोध्यम्। सान्द्रीकृता घनीकृतेन्द्रमहकामुकानां शुनां मुत् प्रीतिर्येन तत्र। मृगदंशश्च शुनको ग्रामसूकरभेदकौ। अस्थिभक्षश्च कपिल: स्यादिन्द्रमहकामुक:॥ इत्युत्पलिनी। मधुरा मधुतृणवीरुत् यत्र। खड्गपत्रो मधुतृणमिक्षुर्मधुतरुर्मत:। इत्युत्पलिनी। सुरसं सारसानां रसितं सारसत्वं यत्र तादृक् कासार: सरो यत्र तत्र। कासार: सरसी सर इत्यमर:। शोभनकसेरुकन्दलुब्धानां पोत्रिणां वराहाणां पोत्रैर्घोणाभिरुत्खाततटास्तडागा यत्र तस्मिन्। कोल: पोत्री किरि: किटिरित्यमर:। चकितास्त्रस्ता: संशयिता वा चातका

कुले बन्धूकबान्धवे सञ्जातसुजातके विसूवितसौदामधनुषि स्मेरकाश्मीररजःपुञ्जपिञ्जरितदशदिशि विकस्वरकमले शरत्समयारम्भे कन्दर्पकेतुः परिभ्रमन् शिलामयीं पुत्रिकां दृष्ट्वा कौतुकेन मोहेन शोकावेगेन मम प्रियानुकारिणीति करेण पस्पर्श। अथ सा स्पृष्टमात्रा शिलास्वभावमुत्सृज्य पुनर्वासवदत्तास्वरूपमापेदे। तामालोक्य कन्दर्पकेतुरमृतार्णवमग्न इव सुचिरमालिङ्ग्य पप्रच्छ। प्रिये वासवदत्ते! कथय किमिदं वृत्तान्तम्। उदिता सती सा दीर्घमुष्णं च निःश्वस्य कथयितुमारेभे। आर्य-

---

यत्र। चक्र हती प्रतीघाते च। मत्सरादिति मत्स्यपुत्रिका जन्तुविशेषः। कदम्बो नीपद्रुमः। कादम्ब इति पाठः क्वचित्। कालहंसः। कादम्बः कलहंसः स्यादित्यमरः। बतक इति ख्यातः। प्रसूतानि विसप्रसूनानि [illegible] च। सितप्रसूनराजीवपुष्कराम्भोरुहाणि च। इत्यमरः। बकालोकि बकसमूहे। [illegible] कञ्चुकी सर्पः। सौगन्धिकं कह्लारम्। सौगन्धिकं तु कह्लारमित्यमरः। हरिणाक्षो वायुः। पृषदश्वो गन्धवह इत्यमरः। कुसुदेत्यादि। निर्वहाः गलितदिक्षा [illegible] यत्र तत्र। कलमगोपिका शालिसंरक्षिका। यूथिकासौ-दिति कथामात्रशेषीकृता। [illegible] बन्धुजीवकः। रक्तकस्तु बन्धूको बन्धुजीवक इत्यमरः। दुपहरिया इति ख्यातः। [illegible] सौदामधनुषीति पाठभूयान्। काश्मीरं कुङ्कुमम्। विकस्वरं विकसितम्। विकासी तु विकस्वर इत्यमरः। अथेत्यादि। एकाकी असहायः। एकादाकिनचासहाये। एकाकी त्वेक एकक इत्यमरः। प्राकृतजन इव नीचजन इव। प्राकृतस्य पृथग्जन इत्यमरः। वाङ्गनमथोऽनित्यचतरेत्यव्ययान्तो निपातः। अथेत्यादि। असाक्षं याता। यथान सेनासन्निवेशं सेनाशिविरं दृष्टेति चिन्तयन्तीं मां प्रति सेनापति-धावित इति सम्बन्धः। तरुगुल्मान्तरितं क्रियमाणं रच्यमानं कायमानिकैः कामार इति प्रसिद्धैर्हीनजातिपुरुषैर्निकेतनं पटमण्डपं यत्र तम्। निवेशः शिविरोद्वाहविन्यासेषु प्रकाशित इति। विश्वप्रकाशः। विरच्यमानं विशेषेण रच्यमानमीश्वरस्य सेनापतेर्गृहं यत्र तम्। अवतार्यमाणमश्वादेर्भूमावुत्तार्यमाणकण्ठारकम्। कण्ठालीति दाक्षिणात्यभाषायां प्रसिद्धम्। वस्त्रपात्रादिस्थापनार्थं वस्त्रादिनिर्मितं पात्रम्। व्यवस्थाप्यमानं यथास्थाने स्थाप्यमानम् वेश्यानां [illegible] यत्र। [illegible] यत्र तम्। हेषा ह्रेषा च निःस्वन इत्यश्वप्रकरणेऽमरः। अवत्यसमाधिः पूर्वमुदिता। यामामानं विश्वमसूचकं ढक्काहतं पुष्कर

पुत्रापुत्रायाः मम मन्दभाग्यायाः कृते महाभाग ! उज्झित-राज्य एकाकी प्राकृतजन इव वाङ्मनसयोरगोचरं दुःखमनु-बभूव । अथोपवासादिना कृशतरो मूलफलादिनार्य्यपुत्र आहारं करोतीति विचिन्त्य फलान्वेषणायोपवनतरूनवलोकयन्ती कति-पयनल्वगोचरमगच्छम् । क्षणेन च तरुगुल्मान्तरितक्रियमाण-कायमानिकनिकेतनं विरच्यमानेश्वरगृहमवतार्यमाणकण्ठार-कमारभ्यमाणपटकुटीकं व्यवस्थाप्यमानवेश्यानिवेशं श्रूयमाण-तुरगह्रेषाशतं वाद्यमानविश्रमढक्काशतपुष्करमन्विष्यमाणस्वादु-सलिलाशयमुद्दिश्यमानविपणिकेतुवंशं सेनासन्निवेशमपश्यम् । किमयं ममान्वेषणाय तातस्य व्यूहः समायात आहोस्विदा-र्य्यपुत्रस्येति विचारयन्तीं मां प्रति चारकथितवार्त्तः सेनापति-र्धावितः । ततः किरातसेनापतिस्तादृश एव सेनान्वितो मृग-यागतः सोऽपि धावितः । अनन्तरं चिन्तितं मया यद्यहमार्य्य-पुत्राय कथयामि तदा स एकाकोभिरेव हन्तव्योऽथ न कथ-यामि तदैभिरहं घातनीयेति चिन्ताक्षण एव द्वयोः सेनयोर्युद्धम-भवदेकामिषलुब्धयोर्गृध्रयोरिव । ततः प्रवृत्तप्रतिशरासनशरा-

---

वाद्यविशेषो यत्र तम् । हड्डिविशिष्टो विश्रमशब्दस्तुगृह एवेति स्पष्टं भाष्यप्रदीपे । स्याद्यशः पटहो ढक्केत्यमरः । पुष्करं पङ्कजे व्योम्नि पयःकरिकराग्रयोः । औषधद्वीपविहगतीर्थरा-गोरगान्तरे । पुष्करं तूर्य्यवक्त्रे च काण्डे खड्गफलेऽपि च । इति विश्वप्रकाशः । उद्दि-श्यमान उत्पाद्यमानो विपण्यां पण्यवीथिकायां केतुर्यत्र । दिश अतिसर्जने । यद्वा उद्दि-श्यमानः केतोरस्मिन् भागेऽस्मदीय आवास इति ज्ञानार्थमुद्देशविषयीक्रियमाणः केतुर्यत्र । आहोस्वित् संशयेऽव्ययसमुदायः । चारेण गूढपुरुषेण कथिता वार्त्ता वृत्तान्तो यस्मै । चारश्च गूढपुरुषः इत्यमरः । तादृशचारकथितवृत्तान्तः किरातसेनापतिः । भेदाः किरात-शबरपुलिन्दा म्लेच्छजातयः । इत्यमरः । मृगयाया आखेटार्थमागतः । आखेटो मृगया स्त्रियामित्यमरः । अनन्तरं द्वयोरेकदेशागमनोत्तरम् । एकामिषलुब्धयोः । आमिषं पलले लोभे सम्भोगोत्कर्षयोरपि । आमिषं सुन्दराकारभूपादिविषयेऽपि च ॥ इति विश्वप्रकाशः ।

सारदुर्दिनच्छन्नदिनकरकिरणे रणकर्म्मविशारदद्विरददन्तद्वयोत्क्षिप्तसुभटक्षणश्लिष्यमाणविद्याधरविभ्रमे समरदर्शनसञ्चरदनेकनभश्चरचारणचक्रवाले वेतालसमाक्रान्तस्कन्धकबन्धचक्रक्रियमाणचारुप्रचारे चारुभटखड्गखण्डितद्विरदपादसमाप्तपिशाचीकर्णोलूखलाभरणकौतुके समुत्पतदतिनिनदनान्दीके कान्दिशीकभीरुणि रणस्थले शृगालप्रार्थनीयेष्वामिषपिण्डेष्विव जिह्मगदष्टेष्विव शरीरेष्वनास्थां कलयन्तः समं द्विषां धनुषां च जीवाकृष्टिं योधाश्चक्रुः। त्यागिन इव दानवन्तो मार्गणसम्पातमसहन्तः समृद्धविलासिन इव शृङ्गारशोभिताः सहेमकक्षाश्च सदारामा इव कदलीराजिताः सद्विजाश्च निशा इव नक्षत्र-

---

तत एवं रणस्थले सति। रणभूमौ धान्यमर्दनस्थान इति यावत्। योधाः समस्तैकैकावच्छेदेन द्विषां धनुषां च जीवस्य जीवायाः प्रत्यञ्चायाश्चाकृष्टिमाकर्षणञ्चक्रुरिति सम्बन्धः। अक्रमातिशयोक्तिरलङ्कारः। पूर्वनिपातप्रकरणमित्यत्वे त्वत्यन्तातिशयोक्तिः। अत्यन्तातिशयोक्तिस्तु पौर्वापर्य्यव्यतिक्रमः। इति लक्षणात्। प्रकृतो यः प्रतिशरासनात् शत्रुधनुषः शरासारो बाणधारासम्पातस्तेन दुर्दिनं मेघच्छन्नदिनं तेन छन्नदिनकरकिरणे सति। गौणे चासारदुर्दिने। धारासम्पात आसारः। मेघच्छन्नेऽह्नि दुर्दिनमित्यमरो द्वयोः। रणकर्मणि विशारदश्चतुरो द्विरदो हस्ती तेन दन्तद्वयोत्क्षिप्तः सुभटः शूरस्तेन क्षणं श्लिष्यमाण आश्लिष्यमाणो विद्याधरविभ्रमो देवयोनिविशेषविशिष्टभ्रमो येन तस्मिन् सति। समरदर्शनार्थं सञ्चरदनेकनभश्चरचारणानां देवकुशीलवानां चक्रवाले मण्डले सति। चक्रवालं तु मण्डलमित्यमरः। चारणास्तु कुशीलवाः। चारुभटखण्डितद्विरदपादेन समाप्तं सम्यक् प्राप्तम् पिशाच्याः कर्णे यदुलूखलाभरणं तत्कौतुकं यत्र। समुत्पतन्नतिनिनद एव नान्दी नाटकादौ प्रयुज्यमानः काव्यार्थसूचकः श्लोको यत्र। नद्यृतश्चेति कप्। न कपीति ह्रस्वनिषेधः। तथा च भरतः। आशीर्नमस्क्रियारूपश्लोकः काव्यार्थसूचकः। नान्दीति कथ्यते। कान्दिशीको भयपलायितः। कान्दिशीको भयद्रुत इत्यमरः। भीरुः। प्रमाणे जम्बुके भीरुः शूरे वै दानवान्तर इति विश्वः। जिह्मगः सर्पः। जीवा जीवन्तिकाभूम्योर्मौर्वीशिञ्जितकर्मसु। इति विश्वप्रकाशः। त्यागिन इव दातार इव दानं मदजलवितरणं मार्गणानां बाणानां याचकानां च सम्पातमसहन्तो महामगा गजा रेजुः।

मालोपशोभिता दिवसा इवोल्लसत्पुष्करा महामृगा बभुः। उत्क्षिप्ता इव क्षमां मुञ्चन्तः पयोधय इवावर्त्तशोभिता सौमेय-स्थोद्यानदेशा इव समल्लिकाक्षाः कुलगृहा इवाभिनवभाण्ड-हारिणो रत्नाकरा इव सदैवमणयो लेखा इव सेन्द्रधृतय-स्तुरङ्गाश्च विरेजुः। कर्णाभ्यां श्रुतपरपरिवादाभ्यां खलोदय-साधुविपत्तिसाक्षिभ्यामक्षिभ्यां मूर्ध्ना चास्थानेऽपि नमता विमुक्तोऽहमिति हर्षादिव ननर्त्त चिरं कबन्धः। ततः कृत-परिहासेनेव चक्षुः पिदधता परापवादश्रवणभीरुणेव श्रोत्रवृत्तिं स्थगयता सोन्मादेनेव वायुवेगविक्षिप्तेन पलितङ्करणेनेव सुर-योषितामन्धकरणेनेव योधानां तिमिरेणेव समरप्रदोषस्य पतितेनेव विमुक्तगोत्रेण मीमांसकदर्शनेनेव तिरस्कृतदिगम्बर-दर्शनेन सत्पुरुषेणेव विष्णुपदावम्बिना रणजेन रजसा जजृम्भे। कश्चिद्राम इव रावणवधमकरोत् कश्चित् कृष्ण इव नरकच्छेदमकार्षीत् कश्चिद्बौद्धसिद्धान्त इव क्षपित- श्रुति-

महामृगः पुष्करिद्वीर्घमारुतौ इति हारावली। उत्क्षिप्ता इवाव्यवस्थितचित्ता इव क्षमां शान्तिं पृथ्वीं च। तुरङ्गा अश्वा विरेजुः। कबन्धोऽपमूर्धकलेवरम्। इत्यमरः। इत्थं हर्षान्ननर्त। श्रुतपरपरिवादाभ्याम्। परापवादाभ्याम्। परापवादाभ्यां साक्षौ साक्षाद्द्रष्टा साक्षाद्द्रष्टरि सञ्ज्ञायामिति साधुः। अस्थाने महानर्हस्थाने नमता। ततो रजसा जजृम्भे प्रादुर्भूतम्। जृभि गात्रविनामे। भावे लः। कृतपरिहासेनेव चक्षुः पिदधताच्छादयता। लोकप्रसिद्धमेतत्। वायुरान्तरो वाह्यश्च। योधानां भटानां पलित-ङ्करणेन। पलितं जरसा शौक्ल्यमित्यमरः। आढ्यसुभगेति करणे ख्युन् अरुर्द्विषदिति मुम्। समरप्रदोषस्य रणरजनीमुखस्य। पतितेन इव महापातकिनेव विमुक्तगोत्रेण। गोत्रं वंशः। गोत्रा पृथ्वी। आशङ्कित ऊर्वीभङ्गो येन। पक्षे उरुर्महान् भङ्गः पराजयः। शरतल्पं शरशय्याम्। चिराय। कार्त्तिकशुक्लदशमीमारभ्य माघशुक्लाष्टमीपर्य्यन्तमित्युदग्रश-हरपाठकाः। सर्वोपपत्तिस्तु तेषां कृतौ द्रष्टव्या। पक्षे चिराय चिररात्राय चिरस्येति चिरार्थका इत्यमरः। विक्लवीकृतं विह्वलीभूतं सर्वाङ्गं यस्य। शक्तेर्बलस्य मोचं त्यागम्। पक्षे शक्तेर्वासवदत्ताया अमोघाया मोचं घटोत्कचे त्यागम्। शक्तिरायुधभेदे स्यादुत्साहादौ

वचनदर्शनोऽभवत् कश्चित् क्षपणक इव कटावृतो बभूव कश्चिदाशङ्कितोरुभङ्गः सुयोधन इव पयसि विवेश कश्चित् शरतल्पगतो भीष्म इव चिराय श्वसन्नासीत् कर्ण इव विक्लवीकृतसर्वाङ्गः शक्तिमोक्षमकरोत्। ततो विध्वस्तध्वजपटं पतत्पताकं च्युतचापचामरापीडं स्खलत्खड्गं निधनमवाप सैन्यम्। अनन्तरं यस्याश्रमस्तेन मुनिना पुष्पादिकमादायागतेन प्रतिपन्नवृत्तान्तेन त्वत्कृते ममायमाश्रमो भग्नोऽतः शिलामयी भवेति शप्ताहम्। क्षणेन च वराकीं बहुदुःखमनुभवन्तीं मां विलोक्यार्य्यपुत्रकरस्पर्शावधिं शापान्तमकरोत्। ततः कन्दर्पकेतुः समागतेन वासवदत्तया च सह स्वपुरं गत्वा यथाहृदयाभिलषितानि सुखान्यनुभवन् कालं निनाय।

इति महाकविसुबन्धुविरचिता वासवदत्ता समाप्ता।

---

खले स्त्रियाम्। इति हेमचन्द्रः। निधनं मरणम्। मरणं निधनोऽस्त्रियामित्यमरः। प्रतिपन्नवृत्तान्तेन ज्ञातवृत्तान्तेन। शप्ता कर्मणि क्तः। क्षणेन च वराकीं बहु दुःखं भवद्वियोगजमनुभवन्तीं मां विलोक्य शापं शिलामयत्वरूपम्। आर्य्यपुत्रस्य करस्पर्शोऽवधिरन्तोऽस्य तादृशमकरोत्। नागरीभिरार्य्यपुत्रेति नाट्योक्त्या च प्रयुज्यते। इति भरतः। ततः कन्दर्पकेतुः समं वासवदत्तासङ्गसमकालमागतस्तेन मकरन्देन वासवदत्तया च सह स्वपुरं कुसुमपुरं गत्वा हृदयं मनोऽनतिक्रम्य यथाहृदयं मनोऽनुरूपमभिलषितं येषु तानि सुखानि सम्भोगशृङ्गारसम्बन्धीन्यनुभवन् कालं निनाय। चेतो हृदयं स्वान्तं हृन्मानसं मन इत्यमरः। वासवदत्तामधिकृत्य कृताख्यायिका वासवदत्ता। अधिकृत्य कृते ग्रन्थ इत्यर्थे छवाच्छः। तस्य लुबाख्यायिकाभ्यो बहुलमिति लुप्। वासवदत्ताख्यायिका समाप्तेति पाठस्तु भ्रममूलकः।

वासवदत्ताव्याख्या समाप्ता।

---



Jibananda vidyasagara B.a

श्रीजीवानन्द विद्यासागर

শ্রীজীবানন্দ বিদ্যাসাগর